# सम्पादकीयसमितिः

१. धर्माधिकारी विद्वान् हेच्. एन्. राघवेन्द्राचार्यः, एम्.ए.,
विश्रान्त महाराजकालेज् तत्त्वशास्त्र सहायोपाध्यायः.
(अध्यक्षः)

२. धर्माधिकारी, ज्यौतिषरत्नं ब्र ॥ श्री ॥ करूरु शेषाचार्यः
विश्रान्त श्रीमन्महाराजसंस्कृतमहापाठशालाज्यौतिषप्रधा-
नोपाध्यायः.

३. पण्डितरत्नं, महाविद्वान् ब्र॥ श्री॥ एम्. एस्. वेङ्कटेशशास्त्री-
श्रीमन्महाराजसंस्कृतमहापाठशाला अद्वैतवेदान्तप्रधा-
नापाध्यायः

४. ब्र॥ श्री॥ विद्वान् कृष्णदेशिकाचार्यः
विश्रान्तश्रीमन्महाराजसंस्कृतमहापाठशालाव्याकरणप्रधा-
नोपाध्यायः.

५. ब्र॥ श्री॥ विद्वान् चा. केशवशास्त्री
श्रीमन्महाराजसंस्कृतमहापाठशालालङ्कारप्रधानोपाध्यायः.

६. ब्र॥ श्री॥ विद्वान् च. रामचन्द्राचार्यः
श्रीमन्महाराजसंस्कृतमहापाठशालामीमांसाप्रधानो —
पाध्यायः.
(सम्पादकः)

७. ब्र॥ श्री॥ विद्वान् टि. जि. सिद्धप्पाराध्यः, एम्.ए.
श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः (कार्यदर्शी).

## सधन्यवादमस्माभिरङ्गीकृता एता विनिमयरूपाः पत्रिकाः

1. दि वाय्स् आफ अहिंसा, आलिगंज्
2. कल्पक, अलहाबाद्
3. जर्नल् आफ् दि गङ्गानाथ झा रिसर्च् इन्स्टिटयूट्, अलहाबाद्
4. सद्बोधचन्द्रिका, आनन्दवन
5. जैन आण्टिक्वेरि, आरा
6. संस्कृत साकेत, अयोध्या
7. दि मिथिक् सोसैटि जर्नल्, बेङ्गळूरु
8. दि मैसूरु स्टेट् एजुकेषन् लीग् जर्नल्, बेङ्गळूरु
9. सर्वज्ञसन्देश, बेङ्गळूरु
10. दि. मैसूरु इन्फर्मेषन् बुलेटिन्, बेङ्गळूरु
11. आस्ट्रलाजिकल् म्यागजीन्, बेङ्गळूरु
12. अमृतवाणी बेङ्गळूरु (वार्षिकपत्रिका)
13. चेतना, बेङ्गळूरु
14. शरणसंदेश,
15. विज्ञान ज्योतिष, बेङ्गळूरु
16. दि आर्यन् पाथ्, बरोड
17. दि जर्नल् आफ दि ओरियेंटल इन्स्टिटयूट्, बरोड
18. मधुरवाणी, बेलगाम्
19. सूर्योदय, बेनारस्
20. संस्कृतरत्नाकर, बेनारस्
21. योग, बाम्बे
22. फ्रीडं फस्ट्, बाम्बे
23. संस्कृतसाहित्यपरिषत्पत्रिका, कल्कत्ता
24. प्राच्यवाणी, कल्कत्ता
25. आन्ध्रसाहित्यपरिषत्पत्रिका, कोकनाड
26. वैदिकमनोहरा, काञ्चीवरम्
27. श्रीरामानुज रिलिजियस् कार्टर्लि, काञ्चीवरम्

28. दि अमेरिकन् रिपोर्टर्, न्यू देहलि
29. दि जर्नल् आफ् ओरियेण्टल् रिसर्च्, मद्रास्
30. दि हिन्दु (वारपत्रिका), मद्रास्
31. ब्रह्मविद्या, अड्यार्, मद्रास्
32. काङ्ग्रेस् क्वार्टर्लि जर्नल् (अमेरिक), मद्रास्
33. दि एज्युकेषनल् रेव्यू, मद्रास्
34. विवेकाभ्युदय, मङ्गलूरु
35. दि अन्नल्स् आफ् भण्डार्कर् ओरियेण्टल् रिसर्च् इन्स्टिटयूट्, पूना.
36. दि पूना ओरियेण्टालिस्ट्, पूना
37. दि अन्नाल्स् आफ् श्री वेङ्कटेश्वर ओरियेण्टल् इन्स्टिटयूट्, तिरुपति.
38. श्री तिरुमलै तिरुपति देवस्थानम् बुलेटिन्, तिरुपति
39. उद्यानपत्रिका, तिरुवाडि
40. दि जर्नल् आफ् ट्रावाङ्कोर् यूनिव्हर्सिटि ओरियेण्टल् म्यानुस्क्रिप्टस् लैब्रेरि, ट्रिव्याण्ड्रम्.
41. धर्मबोध, उडुपि
42. ब्रिटिष् बुक् न्यूस्, लण्डन्
43. बुलेटिन् फार् लैब्ररीस्, युनेस्को, प्यारिस्
44. प्रबुद्धकर्णाटक, मैसूरु
45. विश्वकर्मा, मैसूरु
46. वेळकु, मैसूरु (वारपत्रिका)
47. दि राषनलिस्ट्, मैसूरु
48. आत्मविचार, मैसूरु

श्रीः

## क्रय्यप्रत्नपत्रिकाप्रकटनम्

अयि सहृदयाः संस्कृतभाषाप्रणयिमहोदयाः,

सविनयादरमिदमिदानीमावेद्यते भवतां सविधे। श्रीमहीशूर-पुरमहाराजसंस्कृतमहापाठशालायामस्यां शराब्धिनवभू (१९४५) मितक्रिस्तशकात्पूर्वं प्रायो विंशतिवत्सरैः संमुद्रितानि प्रत्नानि सर्वाण्यपि त्रैमासिकपत्रिकासंपुटानि साम्प्रतं स्वल्पमूल्येन क्रयणार्हाणि सज्जानि वर्तन्ते।

इमानि सरसोपादेयमनोहरविषयगर्भितानि पत्रिकासम्पुटानि गीर्वाणकलाविदुषामितरेषां मेधाविनां पाठशालानां च भृशमावश्य-कानि। नात्र स्तोकमात्रोऽपि सन्देहः। समयोऽयं नातिक्रमणीयः सुधीभिः।

त्वरन्तां भवन्तस्तत्संग्रहणाय। प्रोत्साहनीयोऽयमभिसन्धि-र्दयालुभिः श्रीमद्भिरित्यभ्यर्थना।

मूल्यक्रमः

| | | एकस्य सम्पुटस्य | | | एकस्याः सञ्चिकायाः | | |
|---|---|---|---|---|---|---|---|
| विदुषां पाठशालानां च .... | रू. | ० | १२ | ० | ० | ४ | ० |
| अन्तेवासिनाम् .... | | ० | ८ | ० | ० | ३ | ० |

(पार्थक्येन प्रेषणव्ययः)

सञ्चिकामपेक्षमाणैर्महाभागैर्विलेखनीयो लेखो निर्दिष्टविद्या-शालाध्यक्षाय ॥

॥ श्रीः ॥



# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः "

(ईशोपनिषत्)

सम्पुटम् २७]

1951 Jan. and Dec.

खर—वासन्ती-हैमन्ती

[सञ्चिकाः १-४

## सुभाषितानि

जन्मस्थेमलयं समस्तजगतां यस्यैव लीलायितं
यस्मिन्नायतते भवस्थिरमहापाशक्षयः प्राणिनाम् ।
तद्ब्रह्मादिभिरप्यगम्यविभवं विश्वाधिकं शाश्वतं
साम्बं ब्रह्म रसालमूलरसिकं पश्येयमन्तर्दृशा ॥ १ ॥

सत्प्रश्नप्रसरः सतां परिमळप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैव निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ २ ॥

धारा नैव पयोमुचां यदुपते प्रेमाश्रुधारा परं
स्वानां नापि च गर्जितं स्तुतिकृतां सिद्धेश्वराणां ध्वनिः ।

विद्युन्नामरनर्तकीकरचयालङ्कारकान्तिः प्रभो
नो वायुः सुरवृक्षपुष्पसहगानलशालिपक्षभिहृत् ॥ ३ ॥
नीलं नैव नभः सुलाञ्जितशचीभर्तुर्मुखे नीलिमा
मेघाः क्वापि न सन्ति किं तु दिविजभ्राजद्विमानाम्बुदाः।
तामिस्रं न हि दिश्यथेदृशमपि त्वां मानुषं मन्वतां
चित्तेष्वस्ति न वेपथुर्निजजने भीतेन्द्रगात्रे परम् ॥ ४ ॥
अश्वत्पश्वपवर्णमर्णवसुते त्वन्नामकर्णामृतं
मत्पापानि महत्तराण्यपि मुहुर्मुष्णाति कृष्णाङ्गने ।
अक्षीणि प्रतिरुन्धदन्धतमसं गेहेषु भूयिष्ठम-
प्यङ्गुष्ठप्रमितैव दीपकलिका हा हन्त नो हन्ति किम् ॥ ५ ॥
ज्वलतु जलधिक्रोडक्रीडत्कृपीडभवप्रभा-
प्रतिभटपटुज्वालामालाकुलो जठरानलः।
तृणमपि वयं सायं संफुल्लमल्लमतल्लिका-
परिमळमुचा वाचा याचामहे न महीश्वरान् ॥ ६ ॥
वाजी चारु(ग)मतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः
प्रोत्तुङ्गस्तनमण्डला विजयिनो भृत्याः पुरः पश्चगाः।
ताम्बूलं मधुरं सखा सुचतुरः सम्पद्यते चेत्पथि
प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः ॥ ७ ॥
दैवं पुरुषकारेण को निवर्तितुमर्हति।
विधातृविहितं मार्गं न कश्चिदतिवर्तते ॥ ८ ॥
तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः।
प्रसह्य वित्ताहरणं न कल्कः
तान्येव भावोपहतानि कल्कः ॥ ९ ॥
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य ये मर्मसु सम्पतन्ति
तान् पण्डितो नावसृजेत्परेषु ॥ १० ॥
रत्नोदारचतुःसमुद्ररशनां भुक्त्वा भुवं कौरवो
भग्नोरुः पतितः स निष्परिजनो जीवन् वृकैर्भक्षितः।
गोपैर्विश्वजयी जितः स विजयः कष्टैः क्षिता वृष्णयः
तस्मात्सर्वमिदं विचार्य सुचिरं शान्त्यै मनो दीयताम् ॥ ११ ॥

सि. रामचन्द्राचार्यै
संग्रहीता

हि बार्हस्पत्या। एताविति किम्? ते यदेव किञ्च घ्नी, चक्रे इत्यनयोः अन्त्यः स्वरः पकारे परे सति प्रग्रहस्स्यात्। यथा वार्त्रघ्नी पूर्णमासे—चक्रे पृष्ठानि पपर इति किम्? वार्त्रघ्नि स्यात् चक्रे आग्नेर्जनुषा घ्नी चक्रे इति किम्? शका भौमी पात्रः—ईशे पशुपतिः पशूनाम्—आन्मही—इति आन् इत्येतत्पूर्वः महीशब्दः प्रग्रहः स्यात्। यथा महन्माहि अस्तभायत् आनिति किम्? एक इन्मही देवस्य ॥

ऊर्ध्वे शाखे धृते शृङ्गे एने मध्ये च देवते।
पार्श्वे एवोत्तरे अक्ते तृण्णे तृद्ये कनीनिके ॥
शिप्रे रथन्तरे शस्त्रेऽहोरात्रे चोत्तमे उभे।
सामे सदोहविर्धाने [1]व्रजेऽधिषवणे शिवे।
विषुरस्य, विरूपे च दृढे, धर्मं, सदने हुले।
अर्पिते रैवते पूर्त्ते भागधे च धृतव्रते।
अच्छिद्रे अनृते प्रत्ते असमे त्वे इत्यनिङ्ग्यगम् ॥

[2] एष्वन्त्यः स्वरः प्रग्रहस्स्यात्। यथा—ऊर्ध्वे समिधौ-विशाखे नक्षत्रम्-विधृते सर्वतः—अन्तरा शृंगे तम्-एवैने लोकं गमयति-प्रणेनेक्ति मध्ये एवैने करोति। द्वे ह्येते देवते समृध्यै। पार्श्वे परस्सामानः-तथो एवोत्तरे निर्वपेत्। एवेति किम्? नैति षोडश्युत्तरे-घृतेनाक्ते वृषणम्-असन्तृण्णे हि-सन्तृद्ये धृत्यै-बहिर्धा कनीनिके दध्युः-पीत्वा शिप्रे अवेपयः-यद्बृहद्रथन्तरे अन्वर्जेयुः-स्तुतशस्त्रे एवैतेन-अहोरात्रे गच्छ स्वाहा। अहरिति किम्? अतिरात्रे पशुकामस्य-विकर्णी चोत्तमे। चेति किम्? सम्पाद्योत्तमे मसि-उभे निपासि जन्मनी। ऋक्सामे वै-सदोहविर्धाने एव-सद इति किम्? तस्माद्धविर्धाने चर्मन्न्—ननु पदोक्ते पदमिति सामर्थ्यात् हविर्धाने इति पदस्यैव कार्यसिद्धेः सदऽपदं व्यर्थम्।

[1] व्रजेऽधिषवणे, जे अधिषवणे ॥ इति च पाठा ॥ [2] ऊर्ध्वे इत्यादयस्मे इत्यन्तेषु सप्तत्रिंशत्संख्याकेषु पदेष्वधिकृतवर्णः पदान्तः प्रग्रहो भवति इति सर्वे ॥

मैवम्। पदग्रहणस्य स्थलान्तरे भिन्नरूपत्वसम्भावनायां विशेषणं सार्थकम्। भिन्नरूपत्वाभावे तु चोद्यमेवैतत्। ननु तर्हि देवते इत्यस्य स्थलान्तरे सोम देव ते मतिविद इत्यत्र भिन्नरूपत्वात् विशेषणेन भवितव्यम्। तच्च नास्ति। उच्यते। देवते इत्यखण्डपदस्यैव कार्यविधानात् अत्र विशेषणं न युज्यते। अखण्डपदस्य विधानमिति कथं प्रतीयेत? उच्यते। मध्योदात्ते अखण्डपदे देवताशब्दे द्विवचनान्तस्य देवते इति पदस्य ग्रहणमिति ब्रूमः। किञ्च ते इति पदस्य "ते तूपाहरि" त्यादिना पृथक्करणादिति च—नैवं हविर्धाने इत्यस्य अखण्डत्वद्योतकं किञ्चिदप्यस्ति येन सदःपदं वैयर्थ्यमालभेत। प्र पूर्वजे पितरा—अधिषवणे जिह्वा—अधीति किम्? तृतीयसवने पशुकामस्य—सोम्यासः शिवे नः। [1]विषुरूपे अहनी—संवथ्सरस्य रूपे आप्नुवन्ति—विरूपे धापयेते—विषु, रस्य, वीति किम्? दश आ रूपे अन्नम्। दृढे येन सुवः। कृणुध्वँ सदने ऋतस्य—ध्वामिति किम्। समुद्रे सदने सीद—बहुले उभे—भुवनेष्वर्पिते—शाक्वररैवते सामनी—इष्टापूर्ते स सृजेथाम्—भागधे असाव। भागेति किम्? अन्न उदधे या ते—धृतव्रते आविन्ना दर्वी—धृतेति किम्? यस्य व्रते पुष्टिपतिः-वर्म च स्थो अच्छिद्र—सत्यानृते अवपश्यन् प्रत्तेकाममन्नाद्यम्—अस्मे ते बन्धुः। त्वे इत्यनिङ्गयगमिति इङ्गं गच्छतीतीङ्गयगम्। न इङ्गयगम् अनिङ्गयगम् अनिङ्गयान्तमित्यर्थः। तथाभूतं त्वे इति पदं प्रग्रहसंज्ञं स्यात्। यथा त्वे क्रतुमपि—इतिशब्दः पदग्रहणं द्योतयति। पदमिति किम्? ऋत्वे दक्षाय। अनिङ्गयान्तमिति किम्? अनागास्त्वे अदितित्वे तुरासः॥

एते वै सं हि तन्वेव यज्ञेष्टक् पत् परो द्वयोः॥

वै सम्, हि, तनु, एव, यज्ञ, इष्टक्, पत्, इत्येवंपरः एते इत्यस्मिन्नन्त्यः स्वरः प्रग्रहः स्यात्—यथा एते वै संवथ्सरस्य। समिति किम्? एते वा इडायै—एते हि देवानाम्। तस्यैते तनुवौ घोरा—एते एव नमस्यन्न्—एते यज्ञस्य, यदेते इष्टके, यज्ञस्य ह्येते पदे। एवंपर

[1] विषु, रस्य, वि, इत्येवंपूर्वे रूपे इति शब्दे अधिकृतवर्णः पदान्तः प्रग्रहो भवति॥

इति किम्? एते देवा इति-एते इति किम्? पुष्करपर्णे ह्येनम्-अग्रे यज्ञपतिं। परो द्वयोरिति [1]निमित्तिनः एते इत्यस्य उपरि वर्तमानयोः इष्टके, एते इत्यनयोर्द्वयोरन्त्यः स्वरः प्रग्रहः स्यात्। यथा यदेते इष्टके उपदधाति—यज्ञस्य ह्येते पदे। निमित्तिनः परयोरिति किम्? देवीष्टके विधेम, सप्तमे पदे जुहोति॥

द्वे परश्चैकव्यवेतः, कृष्णो वीड् द्वार्यदाचराव्॥
[2]स्थऽपरः पूर्वतो वापि इदेकारोऽन्त एव च॥

द्वे इति प्रग्रहः स्यात्। यथा यद्द्वे नश्येताम्। द्वेद्वे सम्भरति। द्वे इत्यस्मात् परश्च शब्दः प्रग्रहः स्यात्। यथा-द्वे शुक्रे द्वे कृष्णे। द्वे-इत्यस्मादेकेन पदेन व्यवहितोऽपि प्रग्रहः स्यात्। यथा द्वे ह्येते देवते-द्वे सवने शुक्रवती-द्वे वाव देवसत्र। कृष्ण इति—कृष्णः वीद्, द्वारौ, यदा चरावः प्रथः, एवंपरः, पदान्त ईकारः एकारो वा प्रग्रहः स्यात्। यथा अतिष्ठमाने कृष्णः। विसर्गेण किम्? चात्वाले कृष्णविषाणाम्-धिषणे वीडू सती-डिति-किम्? च मे वीरुधश्च मे-देवी द्वारौ मा मा-राविति किम्? संपद्यन्ते द्वादश। अजनन्नमाने यदेदन्ताः। पद्यमानो यदेति, श्रोणिशो यतन्त यदाक्षिषुरित्यत्र न प्रग्रहः। विवसानौ ये चरावः। राविति किम्? राये च नः। अत्र स्थो विष्णोः स्यूरसि-विसर्गेण किम्? या एतस्मिँल्लोके स्थ। पूर्वतो वेति-अपिशब्दः स्थऽपदमन्वादिशति। तदयमर्थः स्थशब्द पूर्वत्र विद्यमाने सति तस्मात्परस्मिन्पदे अन्त्यः स्वरः प्रग्रहो भवति। यथा-शिल्पे स्थस्ते वाम्। स्थश्शिथिरे समीची॥

बहुस्वरस्य ते थे च आकारैकारपूर्वकः॥

बहवः स्वराः यस्मिन् तत् बहुस्वरम्। अत्र स्वरशब्दोपादानं अचां बहुस्वरपदस्य। तस्य सम्बन्धी ते इति थे इति वा शब्द आकारपूर्व एकारपूर्वो वा पदान्तः प्रग्रहो भवति यथा-सुजाते यः—शुक्रामन्थिनौ गृह्णीते-गिरिञ्चाथे दिवश्च दृंहणा यन्नुदेथे, तत्पूर्व

---

[1] अत्र निमित्येते शब्दः सान्निध्याल्लभ्यत इति सर्वे॥ [2] स्थऽपरः पूर्वतोऽप्यादेत्पूर्वस्ते थे तु बह्वचः॥ इति केषु चित्पुस्तकेषु पाठः। एतेन मूलस्थानन्तरार्धमपि व्याख्यातम्॥ सर्वलक्षणमञ्जरीकारेण टिप्पणीस्थपाठ एव आदृतः॥

इति किम्? आ वृश्चयते वै विदथे अन्तरेषाम्। त, थे, इति किम्? अनूच्यमान आसादयति॥

[1] पूर्णे ब्रह्मजेमे आपः सजूः क्रूरं तथैषु च॥

पूर्णे इत्ययं प्रग्रहः स्यात् ब्रह्म जज्ञानमित्यनुवाके [2] यथा-पूर्णे उपदधाति पूर्णे एवैनम्। अत्र किम्? यो वै पूर्ण आसिञ्चति। इमे आप इति। चशब्देन ब्रह्मजेत्यन्वादिश्यते। ब्रह्म जज्ञानम्-आपो वरुणस्य-सजूरब्दः-क्रूरमिव वै-एषु (४) अनुवाकेषु इमे इति प्रग्रहः स्यात्। ब्रह्म जज्ञानमित्यत्र यथा-नहीमे यजुषाप्तुम्। जेति-किम्? ब्रह्मवादिनो वदन्त्यद्भिरित्यत्र त्रय इमे लोका इत्यत्र प्रग्रहत्वं मा भूदिति। आपो वरुणस्येत्यत्र यथा-इमे एवोपधत्ते-सजूरित्यत्र यथा-इमे अश्विना संवत्सरः। क्रूरमिवत्यत्र यथा-इमे वै रोदसी॥

[3] एव रसेन गर्भे च उपोत्तर इमे तथा॥

एव रसेन गर्भे, उप, इत्येवम्परश्च इमेशब्दः प्रग्रहः स्यात्। यथा-इमे एव रसेनानक्ति-रसेनेति किम्? इमएवास्मै लोकाः। यदिमे गर्भमदध्याताम्। यं वा इमे उपावथ्स्यतः॥

ते तूपाहर्नमो गर्भे वायुर्मापैनमभ्यधः॥

तु उप, अहः, नमः, गर्भे, वायुः, मा पा, एनमभि इत्येवम्परः ते इति प्रग्रहः स्यात्। यथा-ते त्वाव न-उ इति किम्? ते ते धामानि। ते उपामन्त्रयन्त-ते अहोरात्रयोः। पुनस्ते। नमोऽग्नये। म इति किम्? ते न व्यजयन्त। ते गर्भमदधाताम्। ते वायुर्व्यवात्। युरिति किम्? ते वाचः स्त्रियम्। ते मा पातमास्य। पेति किम्? ते मास्मिन् यज्ञे। ते एनमभि सं। अभीति किम्? त एनं भिषज्यन्ति। तत्परः किम्? ते देवाः। त इति किम्? बृहदुक्षे नमः॥

ते अस्याचच्छन्दस्वोर्वी [4] यऽग्र यं क्रान्तरासु च॥

[1] पूर्णे ब्रह्मज आपश्च सजूः क्रूरं तथैषु च। इमे एव रसेनोप गर्भे चोत्तरतस्तथा॥ इति पाठः। [2] अनुवाके इत्यनन्तरं सान्निध्यादित्यधिकः पाठः क्वचित्पुस्तके दृश्यते। [3] एव रसेन गर्भे चेदुपोत्तर इति पाठः। [4] येऽभ्यं क्रान्तरासु चेति पाठः॥

अस्य, आचर, एवम्परा ते इति ऋक्[1] छन्दस्वती उषसा, उर्वी रोदसी, ये अप्रथेताम्, यं क्रन्दसी, अन्तरा मित्रावरुणा-आसु सप्तसु ऋक्षु ईकार एकारो वा पदान्तः प्रग्रहः स्यात्। यथा—ते अस्य योषणे—ते आचरन्ती समना। अस्य, आचरन्ती इति किम्? ते अग्रे अश्वमायुञ्जन्। ते नो अर्वन्तः। त आ गतावसा शन्तमेन। छन्दस्वती उषसा पेपिशाने-उर्वी रोदसी वरिवः कृणोतं। ये अप्रथेताम्। अप्र इति किम्? ये ते पन्थानः। यं क्रन्दसी अवसा तस्तभाने। क्रेति किम्? यमग्न पृत्सु मर्त्यम्। अन्तरा मित्रा-वरुणा चरन्ती॥

[2] सोमाय स्वेति चैतस्मिन् वरी इत्याद्ययम्परः॥

सोमाय स्वराज्ञ इत्यनुवाके ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा-अग्नी द्वे धेनू भौमी इत्यादि। स्वेति किम्? सोमाय पितृमते। वरी इतीति-वरी, इति, इति पदद्वयमारभ्य अयम्पर्यन्तः ईकारः एकारो वा पदान्तः प्रग्रहः स्यात्। यथा-पूर्वजे ऋतावरी इत्याह इत्यादि॥ इतिशब्दः किमर्थः? वरीद्वयसम्भवात् कुत्र अवधित्वेन स्वीकार इति सन्देहे सति "सन्देहे सन्निधिं त्वपि" इति वचनात् द्वितीयवरीशब्द एव स्वीकर्तव्यः सन्नि-कृष्टत्वात्। तथा सति पूर्ववरीशब्दस्य एतशब्दस्य च प्रग्रहत्वं न स्यात्। तन्मा भूदिति वरी, इति, इति पदद्वयं गृहीतं। अनेनैव न्यायेन अयम्पर इति अयं यजमान इति संभवति॥

इरावतीप्रभृत्येव दाधारान्तस्तथैव च॥

इरावतीशब्दमारभ्य दाधारशब्दपर्यन्तं ईकार एकारो वा पदान्तः प्रग्रहः स्यात्। यथा-इरावती धेनुमती इत्यादि॥"[3]

कुर्यादिष्टिष्वग्निं गानूद्धवतोऽन्तराकरोत्।
आस्तां गमयतोऽब्रूतां स्तभ्नीतां बिभृतस्त च॥

---

[1] ते अस्य योषणे, ते आचरन्ती इत्येते ऋचाविति यावत्। [2] सोमाय स्वेरा दाधार वरी इत्याद्ययम्परः॥ इति पाठा॥ सोमाय स्वेराद्यादाधा वरी इत्याद्ययम्परे॥ इति सर्वपाठा॥ [3] आङ्पदमत्र मर्यादायामिति 'सोमाय स्वेति टिप्पणिस्थपाठानुसारिणि पुस्तके॥

वाचयत्यप्युभाभ्यां च ताभ्यामेव तनू यद।
प्रवर्तपर आषष्ठात्सदा प्रग्रहकार्यभाक् ॥

कुर्यात् इष्टिषु-इष्टयो नाम दशमादयः त्रयः प्रश्नाः उत्तमानुवाकरहिताः। अग्निं गायत्रम्--अनूद्भवतः। ऊकारादन्यवर्णपूर्वं भवत इति पदं-अत्रान्तरं अकरोत्, आस्तां, गमयतः-अब्रूतां, स्तभ्नीतां, बिभृतस्त-वाचयति-उभाभ्यां ताभ्यामेव-तनू यत्-प्रवर्त एवम्परः आषष्ठात् पदात् पूर्वः वर्तमानः पदान्त ईकार एकारो वा प्रग्रहः स्यात्। अभिविधावयमाकारः। तेन सहेत्यभिविधिः। यथा--मानवी ऋचौ धार्ये कुर्यात्--मारुती याज्यानुवाक्ये कुर्यात्। इष्टिष्विति किम्? अग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। वृषणꣳह्येते दधाते ये अग्निं गायत्रम्। गेति किम्? सधस्थेऽग्निं पुरीष्यम्। उत्तरावती भवतोऽभिक्रान्त्यै। अनूत्पूर्व इति किम्? दीक्षन्तेऽन्तनामा(?)वृत् भवतः--उत्सृज्ये इत्याहुर्ये अत्रान्तरम्। अन्तरामिति किम्? इन्द्रियावी पशुमान्भवत्येव वै। बुध्नवती अग्रवती याज्यानुवाक्ये अकरोत्। इमे वै सहास्ताम्। ते एवैनं प्रतिष्ठां गमयतः--ते अब्रूताम्। वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताम्--ते एव यजमानस्य रेतो बिभृतस्तस्मात्। तेति किम्? मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः-उत्तमे औदुम्बरी वाचयति-ये द्वे अहोरात्रे एव ते उभाभ्याम्--एते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव। अत्र पदद्वयमेकं निमित्तम्। [1]एवपदमुद्दिश्य आषष्ठनियमभंगप्रसङ्ग इति चेत्, नायं प्रसङ्गः। निमित्तैकदेशस्य षष्ठत्वोपपत्तेः सकलस्यापि निमित्तस्य [2]षष्ठत्वं उपचर्यते। लोकेष्ववयवधर्मेण अवयविनो विशेषसिद्धेः। तथा हि--कर्णे कुण्डलं धारयन्तं--कुण्डली देवदत्त इति वदन्ति खलु। एवेति किम्? अपहꣳस्यन्ने। ताभ्यां पतेम। एते वै महायज्ञस्यान्त्ये तनू यत्-यदिति किम्? परिपतये त्वा गृह्णामि तनूनप्त्रे। अकारः पादपूरणार्थं गृह्यत इति विज्ञेयं।

---

[1] निमित्तं तत्पदमुद्दिश्येति सर्वे-अन्यत्र च निमित्त्येतत्पदमुद्दिश्येति क्वचित्पुस्तके॥ [2] षष्ठत्वमुपपद्यत इति क्वचित्पुस्तके॥

हविर्धाने प्राची प्रवर्तयेयुः। वर्तेति किम्? एते धनदा असि नस्त्वम्। प्र णो यच्छतु। सदा प्रग्रहकार्यभागिति [1]एते ते अस्यादयः उपबन्धाः इत्युच्यन्ते। उप समीपे निबध्यत इत्युपबन्धः। प्रग्रहकार्यभाक्—प्रग्रहलक्षणं कार्यं भजतीति प्रग्रहकार्यभाक् (पदं) सर्वदा संहितायामसंहितायां च भवतीति विज्ञेयम्। "प्री चक्रे पोर्ध्वे" इत्युक्त एकारेण विनापि प्रग्रहसंज्ञा स्यादिति। किञ्च उपो देवान्देवानुपो उपो देवानित्यत्र जटायां निमित्तान्यपरोऽपि प्रग्रहः स्यात्। तस्मात् आस्तान्ते त आस्तामास्तान्ते। इत्यत्र उपबन्धप्राप्तिः दूरोत्सारितेति नेयमत्र शङ्का॥

नातेऽवेऽह्व धत्त यांते ग्रामी ज्ञे वर्चसी थुनी।
लोके रुन्धे मासे नित्यम्पस्थे नीचस्त उर्वशी॥

अंत, अवे, अह्व धत्त, शार्याते, ग्रामी, ज्ञे, वर्चसी, मिथुनी, लोके रुन्धे, मासे, उपस्थे, अनुदात्तः त इति शब्दः उर्वशी (१५) एष्वन्त्यः स्वरः आषष्ठादिप्राप्तौ सत्यां नित्यं प्रग्रहो न स्यात्। यथा—द्वे जाये विन्दते—वनस्पते वीड्वङ्गः—अवरुन्धतेऽतिरात्रावाभितो भवतः। अभ्याह्वयते वज्रमेनमभिप्रवर्तयति [2]तत्पदसाहचर्यात् अते इत्यस्य सर्वत्रापि समानपदत्वं विज्ञेयम्। [3]अत एव एव त उभाभ्यामित्यत्र निषेधो न स्यात्। अत्रास्य असमानपदत्वादिति। मनवे यशस्ये—भौमी वायवे। एण्यह्व कृष्णः। ज्योतिर्धत्ते—ज्योतिष्मन्तावस्मा इमौ लोकौ भवतः। यथा शार्याते अपिबः। ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतः। वरुणाय राज्ञे कृष्णः। सोमाय स्वराज्ञे। यज्ञेऽपि कर्तोरिति तावब्रूताम्। ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवतः। अथ मिथुनी भवतः। लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतः। रुन्धे द्यावापृथिवी गच्छ—अवरुन्धे सदा सहस्रम्—पूर्णमासे प्रायच्छत्तावब्रूताम्—मातेव पुत्रं बिभृतामुपस्थे—उपेति किम्? ये प्रतिष्ठे अभवतां वसूनां।

---

[1] ते अस्यादय इत्यारभ्य उपबन्धा इति आरभ्मा उपबन्धा इति च केषुचित्पुस्तकेषु॥ [2] अवेपदसाहचर्यादिति सर्व॥ [3] समानपदमिति किम्? एव ते उभाभ्यामिति क्वचित्पुस्तके॥

नमस्ते अस्त्वायुधायानाततताय धृष्णवे उभाभ्याम् । वृषणौ इव उर्वशी। एषां "द्यावापृथिवी आहुती कृता" विति प्रागवन्त प्रतिषेधार्योऽयं नित्यशब्दः ॥

प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते ॥

प्रग्रहश्च इङ्ग्यश्च उपसर्गश्च प्रग्रहेङ्ग्योपसर्गाः। तेषामन्ते संहितासम्बन्धी सांहितः न सांहितः असांहितः। तस्मिन्-पदक्रमाध्ययनसमये इतिशब्दः प्रयुज्यते। यथा—द्वे इति-वाव। प्रजा इति प्र—जाः। प्रेति सः—अग्न॥

पुनस्त्विङ्ग्यं क्रमे चादिर्विरामस्थं द्विधैक्यतः॥

इङ्ग्यं पदं पुनरुक्तं स्यात् पदक्रमयोः। आदिरिति प्रग्रह इत्यर्थः। अग्रस्तात् प्रग्रहेङ्ग्येति सहोच्चरितत्वात्। क्रमकाले प्रग्रहसंज्ञः शब्दः पुनरुक्तः स्यात्। यथा-ते एनं-ते इति ते। विरामस्थमितिविरामस्थं अवसानस्थं पदं क्रमे द्विधा स्यात्। क्रमकाले अर्धानुवाकयोरन्त्यं पदं क्रमादितिशब्दसहितं अथ पुनरुक्तं च भवेदित्यर्थः। यथा—सविता धियः-धिय इति धियः। पशून्पाहि पाहीति पाहि—क्रम इति किम्? पतयः-रयीणाम्। ऐक्यतः प्रग्रहादीनां उक्तविशेषाभ्यां एकपदवदुच्चारणं स्यात्। उक्तान्येवोदाहरणानि। पुनस्त्विङ्ग्यमित्यत्र तुशब्दप्रयोगेन इङ्ग्यस्य द्वितीयोच्चारणे अवग्रहान्ते विरामं कृत्वा तदिङ्ग्यान्तमुच्यते। अन्यथा अवग्रहाभावात्। यथा ज्येष्ठराज-मिति ज्येष्ठ राजम्। सुप्रजा-इति सु प्रजाः। सूद्गातेति-सु-उद्गाता। अत्र किम्? हरी इति हरी-न इति न॥

[1]नोपसर्गोऽवसानस्थो निहतश्च द्वयोरधः।
अवानास्त्रिषु मध्यस्थोऽ[2]वग्रहो न क्रमे तु च॥

अत्र उपसर्ग इतिपरो न स्यात् पदकालेऽपि। अवसानस्थो यथा-मर्त्येषु-आ-त्वम्। सर्वानुदात्तो यथा-अव-दिवः-वृष्टिम्। द्वयोरधो यथा-आ-प्रति-यच्छ। अत्र-नः-देव्या। अत्र संहितादीर्घ

[1] नोपसर्गो विरामस्थ इति पाठः॥ [2] अवग्रहोऽत्र क्रमे तु च इति पाठः॥

इत्येतावतैवालम्। कण्ठोक्त्या किम्? श्रुत्या अपावृधि-मो षूणः इत्यादौ नैष निषेधः स्यादिति। त्रिषु मध्यस्थो यथा-अन्विति-सम्-प्रेति-यात। अवग्रहो यथा-आकूत्या-इत्या-कूत्यै। क्रमकाले तु सर्वेऽप्युपसर्गा इतिशब्दपरा न भवेयुः। यथा-सन्ते-ते वायुः। आ मे-मे गृहाः। अन्ये त्वन्यथा मन्यन्ते अवसानस्थादीनामुपसर्गसंज्ञैव नास्तीति। तथा सति आक्खिदते च प्रक्खिदते च इत्यादौ पूर्वागमो न स्यात्, अवग्रहत्वात् प्रतिषिद्धायामुपसर्गसंज्ञायाम्। तच्चानिष्टम्। तस्मादस्मदुक्त एव युक्तो नञर्थः॥

इति प्रग्रह प्रकरणम्[1]

[1] व्यासशिक्षाविवरणे संज्ञाप्रकरणमिति केषु चित्पुस्तकेषु॥

# अथ परिभाषा प्रकरणम्

## अथेयात्संहितायां यत् कार्यं चेत्सनिमित्तकम् ॥

अथेत्ययमधिकारः। पदसंहितालक्षणं कथ्यते इत्येतदधिकृतं वेदितव्यं। इत उत्तरं यद्वक्ष्यामः। अयमधिकारो ह्रस्वस्वरविन्यासलक्षणपर्यन्तो विज्ञेयः। अस्यां संहितायां यत् कार्यभाक्पदं, निमित्तेन सह वर्तत इति सनिमित्तकं उक्तकार्यं प्राप्नुयात् यथा—समस्कुर्वताग्निं, इन्द्र एणं प्रथमः। अति दिवस्पाहि इत्यादि। सर्वसंहितास्वेवमेव इति ज्ञातव्यम् ॥

## विकृतं च पदेऽदाद्यनाद्यनुस्वारयुक्पदम् ॥

पदग्रहणस्थलं चकारः सूचयति। पदे पदग्रहणस्थले पदमेवावगन्तव्यम्। न तु पदैकदेशः। [1]यथा पदग्रहणवचने "त्वे इत्यनिंग्यग" मित्युक्ते त्वे क्रतुमित्यत्र प्रग्रहः स्यात्। क्रत्वे दक्षायेत्यत्र तु पदैकदेशत्वान्न प्रग्रहः। पदग्रहणस्थले पदं विकृतमपि कार्यं करोतीत्युक्तम्। यथा—"स्य उच्च एष चेद्धलीति [2]विसर्गस्य लोपग्रहणं पठिष्यते। तत्र एष स्य वाजीतिवत् अयमुष्य प्र देवयुरित्यत्र सकारे षत्वमापन्नेऽपि विसर्गलोपो भवत्येव। तथा—पर्याणीय—छन्दाँ स्युपोपच्छन्दाँसि छन्दाँस्युपेत्यादौ[3] पदग्रहणस्थलत्वात् कार्यं स्यादेव। ननु सर्वस्यापि पदस्य विकृतत्वाभावादत्र कार्यं कथं भविष्यति? उच्यते। सर्वत्र वर्णमात्रस्यैव विकारलोपदर्शनात् "वर्णस्य विकारलोपौ" (१-१-५६) इति प्रातिशाख्ये [4] उक्तत्वाच्चेति ब्रूमः। तर्हि [5] वर्णविकृतमिति किं न स्यात्? अहर्देवानां अभ्यस्थात् इत्यादौ [6]पूर्वरूपकार्यं न भवतीति। अत्र गृहीतं पदं अदादि अत् अकारः आदिः यस्य तदपि

---

[1] यथा "न स्वधा मा प्रपास्यूर्ध्वे" इति पदग्रहणवचने मा इत्युक्ते प्रमा असीत्यत्र पदैकदेशत्वान्नायं निषेध इति क्वचित्पुस्तके. [2] विसर्गलोपार्थं पठिष्यते इति क्वचित्पुस्तके. [3] पदग्रहणस्थलत्वादेतत्कार्यं स्यादेवेति क्वचित्पुस्तके. [4] उक्तत्वाच्चेति। अत्र वर्णेन कार्यं स्यादिति ब्रूमः इति क्वचित्पुस्तके उक्तत्वाच्चेति ब्रूमः। अन्यथा अस्य वैयर्थ्यात्। इति क्वचित्पुस्तके. [5] वर्ण विकृतमिति क्वचित्पुस्तके. [6] पूर्वरूपकार्यं न स्यादेवेति क्वचित्पुस्तके.

कार्यं करोति "धामानूपसर्गाश्चेति" पूर्वागमः। यथा या च विच्छन्द्राः एवमकाराद्यपि, अविच्छेदायैन्द्राः। अनादि—अन् इति आदिः यस्य तत्। अन्काराद्यपि पदं कार्यं करोति। यथा—न पवमानेभ्योऽवच्छिद्यते श्येनोऽसि। एवं अन्काराद्यपि—अनवच्छित्त्यै यावद्भिः। पदग्रहणस्थले गृहीतं पदं नित्यानुस्वारसहितमपि कार्यं करोति [1]विधायकपदमध्ये वर्णमध्ये वा अनुस्वारे स्थितेऽपि कार्यं स्यादित्यर्थः। "अनिङ्गयान्तास्सुवश्चाहास्त्वहः" इत्यनेन अंहशब्दे विसर्गस्य प्राप्तो रेफः तुशब्देन निषिध्यते। किं च निमित्तिनीमित्तयोः वर्णयोः मध्यस्थः सन् हवमहेऽंहोमुचमित्यत्र "यवनहेष्विति कार्यं न निषेधति अन्यत्र अनुस्वारोऽ[2]विरोधीति केचिदाहुः। प्रातिशाख्यमतानुसारेण तद्वचनमभाणि॥

## ह्रस्वस्यानित्यदीर्घे स्यात् तद्वास्याप्युपलक्षणम्॥

ह्रस्वस्य ग्रहणस्य अनित्यदीर्घमक्षरं उपलक्षणं ग्राहकं स्यात् यथा—'षुग्रामोर्वि' त्युक्ते ऊषुण इत्यत्र णत्वम्। अस्य दीर्घं च मोषूणः। अस्य अनित्यदीर्घस्य ह्रस्वमप्युपलक्षणं स्यात्। यथा "उदथापर" इत्युक्ते विद्वानथा भवेत्यत्र यत्वनिषेधः स्यात् अस्य ह्रस्वं च विद्वानथ—अनित्यमिति किम्? "ईयुरायुरि" ति ईयुष्टे ये—आयुष्ट—इत्यत्र षत्वम्। उपेयुस्तद्यजमाना इत्यत्र न षत्वम्॥

## पूर्वं पूर्वन्तु तत्रैव कर्तव्यं प्रथमं यथा॥

तत्र संहिताविधाने पूर्वं पूर्वं पदं वचनं च यथायोग्यं प्रथमं कर्तव्यम्। यथा—भक्ष—आ—इहि इत्यत्र "आद्यष्टसु सवर्णोध्र्व" इति सवर्णदीर्घे—भक्षा—इहि इति स्थिते "एत्वं चेवर्ण उत्तर" इति एकारे कृते भक्षेहीति भवति। अन्यथा एहीति कृत्वा भक्षशब्देन सन्धीयमाने भक्षैहीति स्यात्। तच्चानिष्टम्। पूर्वपदकर्तव्यत्वे एतदुदाहरणम्। पूर्ववचनकर्तव्यत्वे तु वदामः। "धिसुवस्त्रिटपूर्वो निष्पूर्व" इति नकारस्य णत्वे कृते "उत्तमं प्रथमोऽ-

---

[1] एकपदमध्ये वर्णमध्ये वेति सर्व॥ [2] अन्यत्र अनुस्वारोऽविरोधिनिमित्तीति केचिदाहुः इति क्वचित्पुस्तके.

न्त्योर्ध्वे " इति टकारस्य च णत्वे कृते षण्णवत्या इति भवति। अन्यथा "उत्तमं प्रथम" इति वचने प्रवृत्ते सति षणनवत्या इति स्यात्। तच्चानिष्टम्। टकारग्रहणस्य च वैयर्थ्यं स्यात्। तथा इमं विष्यामीत्यत्र "परि वि प्रती" ति "स्वरपूर्वमियाद्धित्व" मिति च वचनद्वयं प्राप्तम्। तत्र द्वित्ववचनस्य प्राथम्ये इमं विष्स्यामि इति स्यात्। तच्चानिष्टम्। तन्माभूदिति षत्वमेव प्रथमं कृतम्। "पूर्वं पूर्व" मिति वीप्सा सर्वत्र एवमेवेति समर्थयति॥

[1]सामान्योक्तस्तु सर्वत्र विशेषो नैव दृश्यते॥

सामान्योक्तविधिः सर्वत्र प्राप्नोति विशेषदर्शनपर्यन्तम्। यथा—तच्छंयोरित्यत्र "तवर्गश्च टवर्गाद्या विति वैकृतछकारे परेऽपि तकारस्य चकारः स्यात्। तत्कार्यस्य छकारस्य विशेषादर्शनात्[2]॥

तयोरेकत्र चाल्पस्थो विशेषो बलवान् स्मृतः॥

एकस्थाने विधिद्वये प्रसक्ते तयोः अल्पस्थः अल्पप्रदेशस्थः संकुचितोक्तविधिः विशेषसंज्ञः स्यात्। एष एव बलवानिति बुधैः स्मृतः। यथा—'लुप्यते स त्वनिङ्थस्थ इति स इत्यस्य विसर्गो लुप्यते। स वान्यमित्यादि। अत्र—"घोषवदुत्तर" इति पूर्ववचनञ्च प्रसरति "ह्रस्वाद्द्वित्वमनुस्वार" इति, सँश्रवा ह इत्यादौ द्वित्वम्। सँसमित्यादौ न द्वित्वं सामान्यविधानात्। एवं सर्वत्र सामान्यविशेषरूपो विधिः निषेधः प्रतिप्रसवः इत्येतत्संज्ञाभेदेन तत्तल्लक्षणपद्धतिर्विज्ञेया॥

---

[1] सामान्योक्तस्तु सर्वत्र विशेषो नैव दृश्यते,
तयोरेकत्र चाल्पस्थो विशेषो बलवान् स्मृतः.

यत्र तु विशेषो नैव दृश्यते तत्र सर्वत्र सामान्योक्तविधिः प्राप्नोति। स विशेषः कीदृशः? एकत्र विधिद्वये प्रसक्ते तयोः अल्पदेशे (अल्पविषयोद्देशेन) तिष्ठतीति अल्पस्थः, संकुचितोक्तविधिः विशेषसंज्ञः स्यादिति सर्वं॥ क्वचित्पुस्तके च. [2] विशेषादर्शनादित्यनन्तरं–तथा –वाच्येव अभ्येव अत्र "स्वरपूर्व" मित्यादिना वैकृते हलि परेऽपि द्विस्वागमौ स्याताभिति सर्वं॥ क्वचित्पुस्तके च.

पुनरुक्तं यतः पञ्चपदमित्युत्तरं च वा ।
पूर्ववद्भवति ज्ञेयं सर्वत्रापि विचक्षणैः ॥

पंच पदानि यस्य तत् पञ्चपदं वाक्यं यत्कार्यभाक् पूर्वोक्तं पुनरुक्तमपि तत्कार्यभाग्भवति। यथा—त्वमग्ने रुद्र इत्यत्र "पृष्ठ्ये याज्योख्ययोरपि" इति यत्वकार्यं अश्मन्नूर्जमित्यत्र अग्ने देवाँ इहावह इत्यत्रापि प्रकृतिं बाधित्वा तथैव भवति। इतिशब्दपरं पञ्चपदानां न्यूनत्वेऽपि द्विपदादि वाक्यं पूर्ववद्भवति। इदं ब्राह्मणवाक्यमित्युच्यते। युक्ष्वाहि देवहूतमाँ अश्वानिति यत्वकार्यं यजुषा वा इत्यत्रापि तथैव भवति। यथा युक्ष्वाहि देवहूतमाँ इत्युखायां जुहोति। स्थलान्तरमपि द्रष्टव्यम्। 'एदोत्पूर्वेऽप्यकारोर्ध्वे एकं" इत्यनेन प्रथमकाण्डे पूर्वत्र स्थितं देवस्य त्वा सवितुः प्रसवेऽश्विनोरित्यत्र अकारे पूर्ववर्णसंमिश्रे वाजपेयसंज्ञानुवाके अनैक्यं बाधित्वा तथैव भवति। पञ्चपदत्वात्। वैश्वानरो न इत्यत्र दधिक्राव्णो अकारिषमिति वाक्यं अम्ब अंबालीत्यत्रापि तथैव। द्रापे अन्धसस्पत इत्यत्र रक्षाच नो अधि च देवेति वाक्यं ये ते पन्थानः इत्यत्रापि तथैव। अश्मन्नूर्जं पर्वत इत्यत्र पावको अस्मभ्यं इति वाक्यं अश्मन्नूर्जमिति परीत्यत्रापि तथैव। इतिशब्दपरत्वात्। यथा—पावको अस्मभ्यँ शिवो भवेत्याहान्नं वै। वाक्यं पञ्चपदमिति किम्? ये अन्तरिक्षे ये दिवीत्युख्ये—येऽन्तरिक्षे ये दिवि येषामिति रुद्रान्त्यानुवाके तथा न भवति। एवं सर्वत्रापि कार्यं भवतीति लक्षणकुशलैः ज्ञातव्यम्। विलोमकालेऽप्येवम्। यत्र पूर्ववाक्ये पूर्वेण एङा अकारस्य ऐक्यं भवति तद्वाक्यं उत्तरत्र अनैक्यस्थानेऽपि "पुनरुक्तं यतः पंचपद" मिति ऐक्यमेव भवति। तदुदाहरिष्यामः।

परि त्वा पुनरूर्जायन्नोऽस्यरातीयतोऽपि च।
सप्त तेऽपो अनु त्वग्ने त्वं गोमांश्चाधि रोचने।
चित्रं च भवतं द्रप्सः सहस्व पुनरैक्यतः ॥

एषु पूर्ववाक्येषु यानि पदानि याज्यादिषु पुनरुक्तानि सन्ति तानि विलोमेऽपि तथैव। ऐक्यत उच्चारणीयानीत्यर्थः यथा-संपश्या-

मीत्यनुवाके परित्वाग्ने पुरं वयमिति वाक्ये, त्वाग्नेऽग्ने त्वा त्वाग्न इत्येतत् पुनरुक्तं सत् इमामगृभ्णन्नित्यनुवाकेऽपि तथैव। भूमिर्भूम्ना इत्यत्र, पुनरूर्जा निवर्तस्व पुनरग्न इति वाक्ये, पुनरग्नेऽग्ने पुनः पुनरग्न इत्येतत्, विष्णोः क्रमोऽसीति प्रश्नेऽपि तथैव। त्वँ सोमेत्यनुवाके अयन्नो अग्निरित्यत्र अग्निर्वरिवो वरिवोऽग्निरग्निर्वरिवः इत्येतत्, यस्त्वा हृदा इत्यनुवाकेऽपि तथैव। आप्यायतामित्यत्र विष्णोः क्रमोऽस्यरातीयतो हन्तेति वाक्ये अस्यरातीयतोऽरातीयतोऽस्यस्यरातीयतः इत्येतत् विष्णोः क्रमोऽसीत्यत्रापि तथैव। परा वा इत्यत्र सप्त ते अग्न इति वाक्ये ते अग्नेऽग्ने ते ते अग्न इत्येतत् प्राचीमन्वित्यत्रापि तथैव। उरुँ हि राजेत्यनुवाके अपो अन्वचारिषमित्यत्र अपो अन्वन्वपोऽपो अनु इत्येतत् यस्त्वा हृदेत्यत्रापि तथैव। संपश्यामीत्यनुवाके अग्ने त्वन्नो अन्तम इत्यत्र नो अन्तमोऽन्तमो नो नो अन्तमः इत्येतत् अग्निर्मूर्धा दिव इत्यत्रापि तथैव। अगन्म सुवस्सुवरगन्मेत्यनुवाके गोमाँ अग्न इत्यत्र गोमाँ-अग्नेऽग्ने गोमान्गोमाँ अग्ने इत्येतत् अग्निना रयिमित्यत्रापि तथैव। ये देवा यज्ञहन इत्यनुवाके नाकं गृण्हानास्सुकृतस्येत्यत्र अधिरोचने रोचनेऽध्यधि रोचने इत्येतत् अग्निं युनज्मीत्यत्रापि तथैव। उदु त्यं जातवेदसमित्यनुवाके चित्रं देवानामित्यत्र अन्तरिक्षँ सूर्यस्सूर्योऽन्तरिक्षमन्तरिक्षँ सूर्यः इत्येतत् नवो नवो भवतीत्यत्रापि तथैव। इषे त्वोपवी रित्यनुवाके भवतन्नस्समनसावित्यत्र अद्य नो नोऽद्याद्य नः इत्येतत् समितँ संकल्पेथामित्यत्रापि तथैव। निग्राभ्या इत्यनुवाके द्रप्सश्चस्कन्देत्यत्र अनु यो योऽन्वनु यः इत्येतत् अभ्यस्थाद्विश्वा इत्यत्रापि तथैव। सन्त्वा सिञ्चामीत्यनुवाके सहस्वारातीयतः इत्यत्र सहस्वारातीयतोऽरातीयतस्सहस्व सहस्वारातीयतः इत्येतत् ध्रुवासि धरुणास्तृतेत्यत्रापि तथैव। त्रिपदं पुनरुक्तं चेद्वाक्यं पूर्ववदुच्यत " इत्यनेन संवपामि समित्यत्र वर्षिष्ठ अधि नाके इत्यस्य उपप्रयन्त इत्यत्रापि तथैव जटा भवतीति केचित्॥

अथ इतः परमनैक्यमुच्यते

आयुर्यज्ञेन वाजश्च प्राणं म आयुरेव च।
पवस्व व्रतपास्सूर्ये परोऽग्न आदयः पुनः॥

येनाग्नेऽस्मिन् सधस्थे च वाज्यध्वनस्त्वनैक्यतः ॥

याज्यादिस्थितवाक्यानां एतेषां अन्यत्र पुनरुक्तानामप्यकारस्य लोपो न स्यात्। क्षत्रस्योल्बमसीत्यनुवाके आयुर्यज्ञेन कल्पतामित्यत्र, कल्पतामपानो अपानः कल्पतां कल्पतामपानः—वाजश्च प्रसवश्चापिजश्चेत्यत्रापि चापिजो अपिजश्च चापिजः इति वाक्यद्वयं चमकेऽपि तथैव। ध्रुवक्षितिरित्यनुवाके प्राणं मे पाह्यपानं मे पाहीत्यत्र अपानं म मे अपानमपानं मे इत्येतत् इन्द्राग्नी अव्यथमानां, भूयस्कृदसि इत्यनुवाकद्वयेऽपि तथैव। त्वमग्ने रुद्र इत्यनुवाके आयुर्दा इत्यत्र आयुर्दा अग्न अग्न आयुर्दा आयुर्दा अग्ने इत्येतत् तृतीयकाण्डेऽपि तथैव। उपप्रयन्त इत्यनुवाके अग्ने पवस्व-स्वपा अस्मे वर्च इत्यत्र अस्मे वर्चो वर्चो अस्मे अस्मे वर्चः इत्येतत् अगन्म सुवस्सुवरित्यत्रापि तथैव। उभावामिन्द्राग्नी इत्यनुवाके त्वमग्ने व्रतपा इत्यत्र त्वमग्न अग्न त्वं त्वमग्ने इत्येतत्—दैवीं धियमित्यत्रापि तथैव। ध्रुवासि धरुणा इत्यनुवाके यास्ते अग्ने सूर्ये रुच इत्यत्र ते अग्ने अग्ने ते ते अग्ने इत्येतत् वयो वा अग्निरित्यत्रापि तथैव। अग्निं युनज्मीत्यनुवाके येनासहस्रं वहसीत्यत्र येनाग्ने अग्ने येन+येनाग्ने–अस्मिन्थ्सधस्थे इत्यत्रापि अस्मिन्थ्सधस्थे सधस्थे अस्मिन्नस्मिन्थ्सधस्थे इति वाक्यद्वयं च यदाकूतात्समसुस्रोदित्यत्रापि तथैव। इमामगृभ्णन्नित्यनुवाके आगत्य वाज्यध्वन इत्यत्र वाज्यध्वनो अध्वनो वाजी वाज्यध्वनः इत्येतत्—व्यृद्धं वा इत्यत्रापि तथैव। ब्राह्मणवाक्यत्वात्। ननु अध्वन इत्यस्य इतिपरत्वाभावात् ब्राह्मणवाक्यमिति कथं प्रतीयते? परमन्त्रस्य इतिपरत्वे पूर्वमन्त्रस्यापि संभवति। कुतः? अनयोरेकप्रयोगत्वादिति ब्रूमः[1]। एवं यदग्ने यानीत्यत्र अलोपविधिः न ह स्म वा इत्यत्रापि तथैव। ता अस्य सूददोहस इत्यादिसर्वेष्वपि मन्त्रब्राह्मणवाक्येषु एवमेव अनैक्यं स्यादिति विज्ञेयं ॥

एदोद्भ्यां वक्ष्यतेऽतश्च यदनेकपदे पुनः।

---

[1] आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमित्याह, इत्यत्र इतिपरत्वं पूर्वमन्त्रस्यापि ब्राह्मणवाक्यतागमकमिति यावत् ॥

जटोच्यतेऽन्यशब्देन तत्रानैक्यं न विद्यते ॥

एङ्च ओङ्च एदोतौ। ताभ्यां सह अतः अकारस्य यत् कार्यं वक्ष्यते ऐक्यमनैक्यं वा तद्वाक्ये अनेकपदे बहुपदे पुनरुक्ते अकारवतः आद्यस्य अन्त्यस्य वा पदस्य पूर्वोक्तादन्यपदेन यत्र जटा कथ्यते तत्र अकारस्य एकारेण ओकारेण वा अनैक्यं कार्यं न भवति, किन्तु तयोः एकारौकारयोरैक्यं भवतीत्यर्थः। यथा भवत्यग्रे बृहन् भवत्यग्रेऽग्रे भवति भवत्यग्र--जन्मन्नग्न इति वैकंकर्ती--अग्न इनीत्यग्नेऽग्न इति--अध्वन आक्रम्याक्रम्याध्वनोऽध्वन आक्रम्य। अनैक्यस्थानपदत्वादनयोरनैक्यमिति केचित्। तदसाधु। अन्यशब्देन किम्? अग्रे बृहन् बृहन्नग्रे-अग्रे बृहन् जन्मन्नग्ने अग्ने जन्मञ्जन्मन्नग्न--अत्र अकारस्य अनैक्यं भवति। पूर्वोक्तस्य सर्वस्यापि पुनरुक्तत्वात् ॥

ग्रहणं त्वेकमुद्दिश्य पदं वै क्रियते यतः।
तदन्यत्र तु न ग्राह्यं यज्जटाभिमतैरिति ॥

[1]यत्र निमित्तं वा कार्यभाक्पदं वा एकं प्रयोजनमुद्दिश्य गृह्यते—यथा 'मन्यमानस्त्रिधोऽग्नयः" अत्र अग्नय इति ग्रहणं अन्वतप्यन्तशब्दार्थमिति व्याख्यायते वाररुचादिभाष्येषु। यानग्नयोऽन्वतप्यन्तेति। तस्मात्कारणात् तत्पदमन्यत्र निमित्तरूपस्य न मुख्यमिति जटाविचक्षणैरुक्तम्। तेन 'नोऽग्नयः पग्नयः। अत्र अनार्षैर्नोऽग्नयो अग्नयो नो नोऽग्नयः इत्यनैक्यं स्यादिति। किंच

[1] यत्र यत्पदं निमित्तं कार्यभाग्वा एकं प्रयोजनमुद्दिश्य क्रियते निर्दिश्यते तदेव पदमन्यत्र प्रदेशान्तरे निमित्तत्वेन वा कार्यभाक्त्वेन वा न ग्राह्यमिति जटाविचक्षणैरुक्तं। यथा- "मन्यमानस्त्रिधोऽग्नयः" इत्यत्र अग्नय इति निमित्तरूपग्रहणं यानग्नयोऽन्वतप्यन्तेत्यत्र अग्नयः--अनु अतप्यन्त इति स्थिते अवग्रहसंहितायाः प्राथम्येन प्रवृत्तत्वात् अन्वतप्यन्तेति "पूर्वं पूर्वं इति संहितायां कृतायां "यवनहेष्वजूर्ध्वोर्ध्वे"ति लोपासंभवात् तदर्थं अग्नय इति गृहीतं निमित्तं पुरीष्यासो अग्नयः--ने नोऽग्नयः पग्नयः इत्यन्यत्र जटायां निमित्तत्वेन न भवति। एवं "कखपेषं तथावर्णपूर्वः संयात्यवग्रहः'। इत्यनेन

॥ श्रीः ॥

# केरलप्रश्नमाला



श्रीमहीशूरपुरमहाराजसंस्कृतसरस्वतीप्रासादमहापाठशालायां
विश्रान्त-ज्योतिश्शास्त्रप्रधानोपाध्यायेन ज्यौतिषरत्न
बिरुदमासेदुषा महाविदुषा
गर्भपुरा (करूरु) भिजनेन

**शेषाचार्येण**

विरचिता स्वोपज्ञभूमिकया संवलिता



मैसूरु
राजकीय शाखामुद्रायन्त्रालये सम्मुद्रिता च विजयतेतराम्
१९५३

॥ श्रीः ॥

# भूमिका

धामनि परोरजसि च त्रयीमये तेजसि त्रयीशिखरे ।
मुनिजनदहराकाशे कृतनिलयः पातु मां सरोजाक्षः ॥ १ ॥

यदनुग्रहेण देही फलानि गतवर्तमानगम्यानि ।
जानीते व्यक्ततरं तरणिं तं भावये जगद्बन्धुम् ॥ २ ॥

अयि सहृदयाः सुधीमणयः विदितचरमेवेदं भवताम् । यद्गणितजातकसंहिताभिः समुल्लसितेऽत्र ज्योतिस्तन्त्रे प्रश्नतन्त्रं जातकस्कन्धान्तर्गतं गहनतमं जातकवज्जनानां शुभाशुभफलावबोधनेन भृशमुपकुर्वाणं पूर्वैर्बहुभिर्बहुधा विस्तारितं च जगति बाभातीति ॥

शास्त्रेऽत्र ज्ञानप्रदीपनामकः कश्चन प्राक्तनो ग्रन्थो दृश्यते । अत्राष्टाविंशतिः काण्डाः सन्ति । आनुष्टुभानि पद्यानि सार्धाष्टचत्वारिंशदुत्तरपञ्चशत ($५४८२\frac{१}{२}$) मितानि वर्तन्ते । अस्य च प्रणेता श्रीविश्वनाथः । अमुष्याव्यभिचरितत्रैकालिकफलाभिशंसनपटीयस्त्वेन साक्षात्कृतग्रहाधिराज भगवत्सहस्ररश्मित्वेन च जैमिनिरिति नामान्तरमप्यस्ति । ज्योतिश्शास्त्रप्रवीणतमो हि भगवान् जैमिनिमुनिः । यतः प्रथते साध्यायचतुष्टयं जैमिनिसूत्रमिति तदीयो ग्रन्थः । असौ विश्वनाथः प्राचुर्येणोदयच्छत्रारूढलग्नैः फलकथनात्केरलीयः । एभिस्त्रिभिर्लग्नैः फलाभिकथनं केरलीयानामनूचानः संप्रदायः । एषां त्रयाणां लग्नानां स्वरूपमग्रे वक्ष्यते । अयं ग्रन्थादौ—

"श्रीमद्गङ्गाधरसुतं चन्द्ररेखावतंसितम् ।
सिद्धिदं सर्वविद्यानां वन्दे दन्तावलाननं"मिति

श्रीमद्गणेशमङ्गलाचरणाच्छ्रीशङ्कराचार्यमतानुग इति प्रतीयते । विश्वनाथोऽयं स्वरचितप्रबन्धस्य—

"ज्ञानप्रदीपकं नाम शास्त्रं लोकोपकारकम् ।
प्रश्नादर्शं प्रवक्ष्यामि सर्वशास्त्रानुसारतः" ॥

इत्युपक्रमणाद्ग्रन्थे तत्र तत्र "शास्त्रे ज्ञानप्रदीपक" इत्यसकृदभिधानाच्च प्रामाणिकत्वं सर्वोपादेयत्वं च व्यनक्ति । ग्रन्थेऽत्र कुत्रापीतरग्रन्थकृतामानु-

लेखनाददसीयो जीवितकालो निर्णेतुं दुश्शकः। हन्त अविसंवादिफलाभिधायकोऽयं प्रबन्धो लेखकाध्यापकाध्येतृदोषजापभ्रंशविपरीतार्थबोधकपदजटिलः प्रतिकोशमन्यान्यो महीयसीं दुर्दशामापन्नः। तस्मान्मुद्रितामुद्रितपञ्चषत्कोशादर्शसाह्येनान्यूनानिरिक्तं तद्ग्रन्थार्थानुवादकः केरलप्रश्नमालाह्वयोऽयं प्रबन्धोऽवहितमनसा मया व्यरचि ललिततमाभिरार्याभिः शशीषुवसुभू (१८५१) समे शके विभववत्सरे कार्तिकशुक्लत्रयोदश्यां रविवारे (२५-११-१९२८) षट्चत्वारिंशे वयसि ॥

ग्रन्थेऽत्राष्टाविंशतिः काण्डा वर्तन्ते। तेषां नामानि काण्डानुक्रमणिकया सुज्ञेयानि। इह वृत्तसंख्या दशाधिकषट्छत (६१०) मिता। इतरग्रन्थार्था अप्यत्र संगृहीताः। यद्यप्ययं प्रबन्धो व्याख्याननैरपेक्ष्येण सुबोधः। तथाप्यन्तेवासिनां बुद्धिक्लेशो मा भूदिति तदर्थं काण्डक्रमेण क्लिष्टाः कतिपये मुख्या एवांशा निरूप्यन्ते। तथाहि ॥

उपोद्घातकाण्डे प्रथमे

अत्रेयमाशङ्का जातकशास्त्रं नृणामाशरीरपातं यथाक्रमं दशाभिः स्वगोचराष्टवर्गैर्योगैश्च त्रिविधं कर्मफलं समभिव्यनक्ति। तच्चैवं दृढकर्मजमदृढकर्मजं दृढादृढोभयकर्मजं चेति। तत्राद्यं शान्तिचिकित्सादिभिरपरिहार्यमशुभं पितृमातृभ्रातृदारपुत्रादिमृतियक्ष्मकुष्ठादिकम्। शुभं गृहकेदारनिधिराज्यलाभादिकम्, द्वितीयं। तैः परिहार्यमशुभं वातपित्तश्लेष्मशीतोष्णप्रकोपशिरोव्यथादिकम्। शुभं कार्यसिद्धिमितधनानामयहर्षादिकम्, तृतीयं। तैः कदाचिन्निरस्यमनिरस्यं चाशुभं चौर्यसर्पदंशगृहदाहपदस्खलनपतनचित्तभ्रंशाद्बन्धनादिकम्। शुभं अधिकृतिसत्कीर्तिनृपवाल्लभ्यादिकं चेति। तदुक्तं सारावल्याम् ॥

दशाप्रभेदेन विचिन्तयेद्दृढं
दृढेतरञ्चाष्टकवर्गगोचरैः।
दृढादृढं योगवशेन चिन्तये-
दिति त्रिधा जातकसूक्ष्मसङ्ग्रहः॥ इति ॥

एवं सति प्रश्नशास्त्रं किमर्थमारम्भणीयमिति?

अत्रोच्यते। कर्म द्विविधं प्राक्जन्मजं वर्तमानजन्मजं चेति। प्रश्नतन्त्रं जातकवत् प्राग्जनिजकर्मफलं व्यनक्ति। किञ्चास्मिन् जन्मनि कृतानां क्रियमाणानां करिष्यमाणानां च प्रबलानां कर्मणां फलमपि

प्रवीति। नन्वेतज्जानिभवानां कर्मणां फलानुभवो भाविजन्मभावी नत्वत्र
गीति चेत्—"अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत" इत्यभि-
युक्तोक्तिबलादनादिसिद्धानुभवबलाच्चेहैव जन्मनि तादृशकर्मफलानुभवः
संप्रतिपन्न एव। ईदृशयोः कर्मफलयोर्विवेकः कथमवगम्यत इति चेत्—
यदा जातकप्रश्नफलयोर्विसंवादस्तदा फलानुभव एतज्जनिजः यदा
तयोरैकरूप्यं तदा प्राग्जनिज इति बोद्धव्यम्।

केचन दैवविदः प्रश्नजन्मकालयोः साम्यं ब्रुवते। तद्यथा शुभाशुभ-
फलानुभवहेतुभूतं कर्मैव दैवमिति कथ्यते। यथा तस्य चोदनयैव
जीवो गर्भरूपेण मातृकुक्षिमधिष्ठितो दशमे मासि शिशुरूपो भूमौ पतति
तथा प्राश्निको दैवेन प्रेरित एव दैवज्ञनिकटमभियाति। ततः प्रश्नसमयो
जन्मसमयसदृश इति॥

तदुक्तं प्रश्नमार्गे—

संप्रेर्यमाणस्त्ववशः शरीरी
प्रसह्य दैवेन शुभाशुभेन।
ज्योतिर्विदः संनिधिमेति यस्मा-
त्प्रश्नोऽप्यतो जन्मसमः फलेषु॥

जन्मलग्नतया प्रश्नलग्नं संकल्प्य पण्डितः।
जातके यद्यदुद्दिष्टं तत्तत्प्रश्नेऽपि चिन्तयेत्॥ इति॥

सर्वार्थचिन्तामणौ च—

यज्जातके निगदितं भुवि मानवानां
तत्प्राश्निकेऽपि सकलं कथयन्ति तज्ज्ञाः।
प्रश्नोऽपि जन्मसदृशो भवति प्रभेदः
प्रश्नस्य चात्र जननस्य न किञ्चिदस्ति॥ इति॥

## संज्ञाकाण्डे द्वितीये

धूमादिपञ्चोपग्रहानयनम्। रवौ चतुर्भीराशिभिस्त्रयोदशांशैश्च
सहिते सति धूमो भवति एतस्मिंश्चक्राभिधाद्द्वाशिद्वादशकाद्रहिते
व्यतिपातः स्यात्। अस्मिन् षड्भीराशिभिर्युक्ते परिधिः। अमुष्मिंश्च-
क्राच्च्युते सतीन्द्रधनुः। अस्मिन् सप्तदशांशैर्युते सति केतुः अयमेवा-
रिति कथ्यते॥

आरूढवीथ्योर्ज्ञानम्। आरूढचक्रोक्तरीत्या दैवविदा स्वाध्युषित स्थलमभितो दिक्षु द्वौ द्वौ राशी विदिक्ष्वेकैको राशिश्चेति द्वादश राशयो विन्यस्याः यथा प्राच्यां दिशि मेषवृषौ आग्नेय्यां विदिशि मिथुनः दक्षिणस्यां कर्कटसिंहौ नैर्ऋत्यां कन्या प्रतीच्यां तुलावृश्चिकौ वायव्यां धनुः उदीच्यां मकरकुम्भौ ऐशान्यां मीनश्चेति। यत्र स्थले स्थित्वा प्रष्टा पृच्छति तत्र यो राशिः स एवारूढसंज्ञकः। स च प्रष्टृसंमुखराशेः सप्तम एव भवति" प्रष्टुः संमुखदिग्भागराशेः सप्तमराशयः। आरूढा इति विज्ञेयाः सर्वत्र प्रश्नकर्मणि" त्यभिधानात् वृषयुग्मकार्कि-सिंहे" ति सार्धश्लोकेन मेषवृषमिथुनसंज्ञितास्तिस्रो वीथ्यः सुगमाः॥

## आरूढकाण्डे तृतीये

छत्रज्ञानम्। पूर्वोक्तवदारूढो ज्ञेयः। तस्य वीथी च ज्ञेया। साऽऽरूढाद्यावती स्यात् तावती प्रश्नकालिकलग्नाद्गण्या। स एव राशिश्छत्रलग्नं भवति एवं प्रश्नारूढछत्रलग्नैस्त्रिभिरेवाग्र फलानि वक्ष्यन्ते। गतवर्तमानभाविचिन्ताज्ञानाय यामचक्राण्यपेक्षितानि तानि च अर्कादि-प्रतिवारं प्रतियाममेकैकक्रमेणाष्टावष्टौ चक्राणि भवन्ति। आहत्य सप्तवाराणां षट्पञ्चाशच्चक्राणि स्युः। तत्स्वरूपमेवम्। दक्षिणोत्तराः पूर्वापराश्च चतस्रश्चतस्रो रेखाः कार्याः। एवं कृते सति नव कोष्ठकाः स्युः। तेषु मध्यमकोष्ठको ब्रह्मस्थानाह्वयः। तदेव दैवज्ञोपवेशनस्थलम्। तद्विहाय प्रादक्षिण्यक्रमेण प्रागाग्नेययाम्यादिदिग्विदिग्विभागेषु ग्रहा अष्टौ लेख्याः। ते तु रविकुजगुरुबुधशुक्रशनिचन्द्रराहवः। तदेवम्। रविवारे प्रथमयामे प्रागादिक्रमेण पूर्वोक्ता रव्यादिग्रहा लेख्याः। तद्वारे द्वितीय-यामे—आग्नेयादिक्रमेणार्काद्या बोध्याः। तद्वारे तृतीययामे याम्यादिक्रमेण ब्रध्नादिकाः खचरा ज्ञेयाः। तद्वारे चतुर्थयामे नैर्ऋतादितो भास्कराद्याः खगा अवगम्याः। इत्थं यामक्रमेणैकैककोष्ठकपरित्यागपूर्वकं रविमुखाः खेटा वेद्याः। एवं पञ्चमादियामेष्वपि विज्ञेयम्। अयमंशः सुस्पष्टो ग्रन्थप्रदर्शितैरष्टभीरविवारयामचक्रैः। अनयैव रीत्या यामक्रमेण चन्द्रा-दिवाराधिपादितः प्राच्यादिष्वेकैककोष्ठकप्रहाणपुरस्सरमुक्तग्रहक्रमानु-रोधेन खचरा विलेखनीयाः॥

यामचक्रतश्चिन्तायास्त्रैकालिकत्वमेवम्। तच्चक्रे वाराधिपाधिष्ठित

दिशमारभ्य प्राश्निकाध्युषितां ककुभं यावद्भूतभाविवर्तमानात्रिकालक्रम-गणनया योऽवशिष्टः कालस्तस्मिन्समये जाता चिन्तेति वक्तव्यम् ॥

## धातुकाण्डे चतुर्थे

राशीनां ग्रहाणां च धातुमूलजीवसंज्ञाः खेटानां लोहशिलारत्न-भूभूषणवर्गाश्च निरूपिताः ॥

## मूलकाण्डे पञ्चमे

राशीनां द्युसदां च सस्यलतातरवः खेचराणां धान्यानि च कथि-तानि ॥

## जीवकाण्डे षष्ठे

खेटानां पृथिव्यादिमहाभूत तद्गुण तद्ग्राहकेन्द्रियाणामाधिपत्यानि द्विपदचतुष्पदबहुपदजानुगाविहगाविपादभेदैः षड्विधा जीवास्तेषां स्वरूपाणि लग्नमित्रतुङ्गस्वर्क्षादिराशिग्रहयोगेक्षणैर्मृगपक्षिमर्त्यप्रभेदाश्च स्पष्टमभिवर्णितानि ॥

## नष्टकाण्डे सप्तमे

लग्नछत्रारूढग्रहयोगेक्षणभावावस्थानैर्नष्टवस्तुनः स्वरूपमवस्थान-स्थलं लाभालाभौ च सविस्तरमुपपादितानि ॥

## छत्रकाण्डेऽष्टमे

छत्रग्रहावस्थानवीक्षणैर्नष्टलाभालाभकार्यसिद्धिभङ्गवैररोगोपशमा-नुपशमव्यवहारविजयधनागमादिफलानि प्रतिपादितानि ॥

## चिन्तनाकाण्डे नवमे

धातुमूलजीवसंज्ञकैरुदयछत्रारूढैर्ग्रहैश्च तत्तच्चिन्तानां नष्टातिगद-शमशत्रुजयधनच्छेदादीनां च कथनम् ॥

## लाभालाभकाण्डे दशमे

उदयछत्रारूढेभ्यस्तत्तद्भावावस्थितैः खचरैस्तेषां द्युचरवीक्षणैश्च रुग्णमृति रिपुनिमित्तकबन्धन प्रस्थितगमनागमन नष्टवस्तुलाभालाभा-दीनां फलानां निगदनम् ॥

### रोगकाण्ड एकादशे

राशीनां खेटानां कृत्तिकादिनवर्क्षाणामर्यमादिनवताराणां वैश्वमुखानां नवतारकाणां च रोगोद्भवावयवविभागप्रकटनं लग्नछत्रारूढैर्ग्रहैश्च रोगपरिहारापरिहार व्याधिस्वरूपाणां प्रकथनं च ॥

### मरणकाण्डे द्वादशे

उदयारूढयोस्तत्तच्छत्रराशिसंभववशादुच्चनीचमृत्युस्थानानि तैर्यथाक्रममृतिरोगानुपशमनिधनानि मृतिकालनिर्देशनानि चाभिहितानि ॥

### भुक्तिकाण्डे त्रयोदशे

प्रश्नकालिकग्रहावस्थितिवीक्षितैः प्रष्ट्रा भुक्तानां सघृतसपायससतैलाद्यन्नानां कथनम् ॥

### स्वप्नकाण्डे चतुर्दशे

लग्नत्रयग्रहयोगेक्षणैः प्रष्ट्रा स्वप्ने दृष्टानां देवगृह परिचितमनुज-केदार कन्या फल नदी वनिता जलाशयादीनामभिधानम् ॥

### शकुनकाण्डे पञ्चदशे

प्रस्थातुः पथि सुशकुन दुश्शकुनाभ्यां गमनप्रतिनिवर्तने दृष्टानां विहगानां स्वरूपाणि च निर्दिष्टानि ॥

### विवाहकाण्डे षोडशे

विवाहप्रश्नकालजलग्नद्युचरवशाद्विवाह्यकन्यायाः सौमङ्गल्य वैधव्य पातिव्रत्य दुश्चरित सापत्न्य देहस्वास्थ्यास्वास्थ्य धनभाग्यादीनि वर्णितानि ॥

### कामकाण्डे सप्तदशे

रतिप्रश्नसमयजलग्नद्युचरैर्दुष्ट भ्रष्ट सुरूपानूढनीचविधवानां वनितानां भोगाः स्त्रीपुंसयोः प्रेमकलहजसम्भोगौ चौर्यवधूरतादीनि च समुदितानि ॥

### पुत्रोद्भवकाण्डेऽष्टादशे

गर्भलाभप्रश्नकालोत्थलग्नग्रहवशाद्गर्भभावाभावौ गर्भस्रावः गर्भ-

स्वास्थ्यं गर्भगशिशुज्ञानं सुखप्रसूतिः दशमे मासि प्रसवदिवसादिपरिज्ञानमेवमादीनि कथितानि ॥

### सुतारिष्टकाण्ड एकोनविंशे

प्रश्नकालवशाज्जनिष्यमाणस्य जातस्य वा अपत्यस्य बालारिष्टं तद्भङ्गाभङ्गौ दीर्घायुष्ट्वं पित्रोः सौख्यतदभावौ सोदरलाभालाभावेवंविधानि बहूनि फलानि सम्यगुक्तानि ॥

### आयुधकाण्डे विंशे

शस्त्ररणानुयोगसमयविलग्नवशाद्योद्धुः शस्त्रस्य समिति भङ्गाभङ्गौ तस्यान्येनापहरणं रिपोर्निधनमेवमादिकानि फलानि भणितानि ॥

### शल्यकाण्ड एकविंशे

गृहनिर्माणकृते शल्यप्रश्नसमये यावती पदभा तावत्यष्टाविंशतियुता मेषादिप्रश्नविलग्नावधिकराशिसंख्यया युक्ता द्वादशगुणिता षोडशभिश्च भाज्या। लब्धिर्न ग्राह्या। शेषमेव ग्राह्यम्। एकादिशेषैरिमानि शल्यानि ज्ञेयानि। तान्येवम् कपालम् अस्थि कचः लोष्ठः काष्ठं दैवतंभस्म शवम् इङ्गालः धान्यं स्वर्णं शिला भेकः गोस्थि श्वास्थि पिशाचश्चेति। शल्यस्थलावबोधनमेवम्। गृहनिर्मितिधरातले कूपकाण्डवक्ष्यमाणरीत्या पूर्वापरा अष्टौ याम्योत्तराः पञ्च च रेखाः कार्याः। एवं कृतेऽष्टाविंशतिः कोष्ठका भवन्ति। ऐशान्यां विदिशि कोष्ठद्वयं विहाय तृतीयकोष्ठे कृत्तिकां विन्यस्य तदादितोऽवशिष्टकोष्ठकेषु तारा विन्यस्याः। तच्चक्रमेवं भवति ॥

### शल्यचक्रम्

| | | | | | | |
|---|---|---|---|---|---|---|
| अ | भ | कृ | रो | मृ | वि | अ |
| रे | आ | पु | पु | आ | स्वा | ज्ये |
| उ | म | पू | उ | ह | चि | मू |
| पू | श | ध | श्र | अ | उ | पू |

अर्कोदयादितो रवेरस्तमयं यावदेकविधमेवेदं चक्रं बोध्यम्। चक्रेऽत्र तदा यत्र कोष्ठके शश्यधिष्ठितं नक्षत्रं वर्तते तत्र शल्यं वक्तव्यम्। केचन प्रश्नविदः प्राश्निकोक्तमृक्षं चक्रेऽत्र कृत्तिकास्थाने विन्यस्य तदादितोऽवशिष्टनक्षत्राणि कूपकाण्डोक्तरीत्या विलेख्यानि। एवं कृते चन्द्रनक्षत्रं यत्र कोष्ठेऽस्ति तत्र शल्यं विद्यत इति॥

अथ शल्यगाम्भीर्यमुच्यते। शल्यस्थलस्य विस्तारं दैर्घ्यं चानामिकायुक्ताग्रकरमितया ऋज्व्या शलाकया प्रमाय तयोराहतिः कार्या। सा विंशत्या भाज्या। शेषमरत्निः निष्कनिष्ठमुष्टियुताविस्तृतहस्तः स्यात्। स नवगुणितो विंशत्या विभाज्यः। शिष्टं तालः अनामिकायुतततकरः स्यात्। स च नवभिर्हतो विंशत्या विभजनीयः। अवशिष्टमङ्गुलं यवोदराष्टकात्मकं भवति न्यूनाधिकभावेनैनावद्भिर्हस्तैः प्रादेशैरङ्गुलैश्च प्रमितं शल्यगाम्भीर्यमिति सुवचम्। तादात्विकग्रहगतिवशाच्छल्यभावाभावौ तत्स्वरूपं प्रकारान्तरेण ग्रहाकिरणैः शल्यं तद्गाम्भीर्यं च स्पष्टमुदीरितानि॥

## कूपकाण्डे द्वाविंशे

कूपखननायाष्टाविंशतिचक्राणि प्रोक्तानि। तान्येवम्। अर्कोदयादितो द्युदलं यावत्सप्तचक्राणि-दिनदलान्तादितो रजनिमुखं यावत्सप्त-तदूर्ध्वं तमीदलान्तं सप्त तदुपरि रव्युदयान्तं सप्त चेति। दिननिशयोः प्रत्येकं पूर्वोत्तरदलयोरेकैकस्य सप्तमांशकालस्यैकैकं चक्रं विलेख्यमिति विवेकः॥

ग्रन्थोक्तस्तच्चक्रनिर्माणक्रमो विलिखितैश्चक्रैः सुबोधः। कूपखातचक्रे यत्र कोष्ठे शशिनक्षत्रमस्ति तत्र खननं समृद्धमुदकम्। भृगुगुरुभकोष्ठयोः खातेऽपि जलसद्भावः। जलजे कूपखननप्रश्नलग्ने शशिभृगू स्थितौ यदि बहूदकम्। तादृशलग्ने रविकुजशनिभिर्दृष्टे युते वा सति जलाभावः। उदयारूढयोर्जलखगैर्युतेक्षितयोः सतोः कूपेऽधस्ताज्जलस्रवणं, छत्रे तथाविध सत्यूर्ध्वे सलिलनिस्सरणं, केन्द्रे शशिबुधौ यदि क्षारोदकाप्तिः केन्द्रे सराहौ शनौ सति कूपमध्यादम्बुनिस्स्रावः एवमादिका बहवो विषयाः समुदीर्णाः॥

## सेनागमकाण्डे त्रयोविंशे

सेनागमनपृच्छासमये चरसंज्ञकाद्विलग्नादारूढाद्वा युते पापयदि

चम्बा आगमनं चतुष्पदे समे वा लग्ने तदंशे भौमे वा सति सेनायाः पथि प्रतिनिवृत्तिः। लग्नात्तुर्ये षष्ठे वा जीवे सति पृतनाया अनागमनम्। आरूढे सबले सति स्थायिनो जयः, छत्रे सबले सति यायिनो जयः। लग्ने बुधभृगू यदि द्वयोः सन्धिरेवमादिकानि फलान्युक्तानि। स्वकं देशममुञ्चन्नेव यो रणसन्नद्धः स स्थायी। अनेन योद्धुं यो रिपुर्विदेशादागतः स यायीति तयोर्लक्षणमवगम्यम्॥

## यात्राकाण्डे चतुर्विंशे

गमनागमनप्रश्नकाले लग्नारूढदशमेष्वन्यतमे वा नीचतुङ्गगमित्ररिपुभिर्ग्रहैर्दृष्टे युते वा यथाक्रमं निकृष्टोत्कृष्टसुहृदरीणामागमनं। लग्नादारूढाद्वा धने सहजे वा पुंग्रहा यदि, प्रोषितात्पत्रस्य दूतस्य वाऽऽगमनं। तस्मात्सुतषष्ठयोरुग्रखेटा यदि, रुग्णस्य प्रोषितस्यागतिरित्यादीनि फलानि बोध्यानि॥

## सरिदागमनकाण्डे पञ्चविंशे

प्रावृषि सरिदागमनप्रश्नकाले यल्लग्नं तस्मात्सप्तमे जलराशौ सति सरित्प्रवाहागमनं। सप्तमे जलग्रहयुते नद्याः कूलङ्कषप्रवाहागतिरेवमादिकानि फलान्यभिहितानि॥

## वृष्टिकाण्डे षड्विंशे

जलर्क्षसंज्ञे वृष्टिप्रश्नलग्ने जलग्रहैर्युते दृष्टे वा सति वृष्टिः। जलभसंज्ञे लग्ने शशिभृगुजौ यदि शोभना वृष्टिः। जलराशिगाः सबलाः शशिजीवभार्गवा लग्नमारूढं वा पश्यन्ति यदि महीयसी वृष्टिरित्यादीनि ज्ञेयानि॥

## अर्घकाण्डे सप्तविंशे

वस्तुनोऽर्घप्रश्नसमये यल्लग्नं तस्मिंस्तद्दशमे च तुङ्गग्रहैर्नीचखगैश्च युते दृष्टे वा सति यथाक्रमं महानर्घः न्यूनोऽर्घश्च स्याताम्। तनुदशमौ सुहृद्भिः शुभैरशुभैश्च खचरैर्युतौ दृष्टौ वा यदि क्रमशः अर्घस्य साम्यमुपचयोऽपचयश्च स्युः॥

## नौसिद्धिकाण्डेऽष्टाविंशे

जलर्क्षसंज्ञके नौकागमनप्रश्नलग्ने शशिगुरुभृगवः स्थिता यदि नाव आगमनं। तादृशि विलग्ने पापा यदि तरणेरनागमनं। लग्नारूढछत्रे-

ष्वशुभैर्दृष्टेषु सत्सु नावो भङ्गः—लग्ने पृष्ठोदयखगैर्दृष्टे तरणेः स्थलान्तरगमनम्। आरूढे लग्ने वोपग्रहा यदि नावो जले मज्जनमित्यादीनि बोध्यानि ॥

सोपोद्घातमिमं ग्रन्थं करुणया समग्रमवलोकमानाः प्रमेदन्तां गुणाभिलाषुकाः सन्तः प्रश्नविदः कालचिन्तका इति सप्रश्रयमभ्यर्थये ॥

अनया भूमिकया प्रीणातु जगदुदयविभवलयविलसितनिगमशिखरतातिविनुतनिरुपमनिरवधिकशुभतमगुणगणजलजनयननिलयोद्गुतकनकसदृशदशशतमयूखमालभारी जगद्बान्धवो भगवानम्बरमणिरिति सर्वमनवद्यम् ॥

द्विशैलधृति (१८७२) सम्मिते शकमहीशकाले शुभे
विरोध्यभिधवत्सरे तपसि मासि कृष्णे दले ।
तिथौ कृत (४) मिते विधोरहनि शेषसूरिः कविः
(६-२-१९५२)
व्यधाल्ललितभूमिकां विधिविदां वरो हर्षितः ॥

एवमावेदकः—

सज्जनवशंवदः
करूरु शेषाचार्यः
ज्यौतिषरत्नम्

# अथ ग्रन्थस्य काण्डानुक्रमणिका

# अथ ग्रन्थानुबन्धः

तत्र ग्रन्थकृतो जन्मकालो ग्रन्थप्रणयनकालश्च

श्रीमहिशूरमहीपति वाणीप्रासादपाठशालायाम् ।
प्रथमज्योतिस्तन्त्राध्यापकपदवीं वरामुपारूढः ॥ १

त्रिशिरःपुर (तिरुच्चिनापल्ली) मण्डलग श्रीगर्भपुरा (करूरु) न्तिके सतां धाम्नि ।
मेलप्पाळयनाम्नि ग्रामे रसखाष्टभू (१८०६) शाके मैत्रे ॥ २

तारे सु (स्व) भानु कन्यायमयम (२२) दिनशनिदिनेषु मृगलग्ने ।
(६-१०-१८८३)
लक्ष्म्यम्बाया गर्भाज्जातः श्रीशैलशेषसूरिरयम् ॥ ३

भूशरवसुभू (१८५१) शाके विभवे कार्तिकसितत्रयोदश्याम् ।
(२५-११-१९२८)
रविवारे ग्रन्थमिमं तेने गोपालगुरुवरकृपातः ॥ ४

## अथेतिहासवर्णनम्

देशाद्देशं भ्रमन्मे बत पितृचरणो द्रव्यलिप्सुः कदाचित्
क्षेत्रं मन्नार्गुडीति प्रथितमसदृशं चम्पकारण्यमेत्य ।
तत्रस्थं लोकनाथं निरवधिकरुणं राजगोपालमाद्यं
नन्तुं देवालयान्तर्न्यधित पदयुगं यत्र काले तदानीम् ॥ ५

गोपालो दृगगोचरो द्विज इव प्रोचे वचः सूतकी
त्वं जातस्तनयोऽद्य त निजगृहं याह्यत्र मागाः कुरु ।
सूनोस्ते मम नाम तेन स सतीं कीर्तिं ध्रुवं लप्स्यते
याहीति द्रुतमेव तन्निशमयन्प्रस्थाय भेजे गृहम् ॥ ६

तत्रागारे मत्पिता सूतिकाया-
स्तल्पं वत्सं तेजसा रोचयन्तम् ।
वीक्ष्य स्मृत्वा तद्वचोऽतीव हृष्टो
गोपालाह्वं पूर्वजं मे व्यतानीत् ॥

जज्ञे सोऽयं क्षयाब्दे नववसुगिरि भू (१७८९) शाककालेऽर्यमर्क्षे
मासो मेषस्य यत्र शरशशि (१५) सदृशे जीववारे तुलायाम् ।
(२६-४-१८६६
लग्नेऽथ प्राप देवाष्टशशि (१८३३) मितशके चापमासे निशायां
सौरेर्वारे तृतीयेऽहनि परमपदं हन्त साधारणाब्दे ॥
(१७-१२-१९१०

अथ कार्तज्ञ्यप्रदर्शनम्

नानोत्सर्गापवादैर्बहुतरगहने प्रश्नतन्त्रे विशाले
होरातन्त्रे च हृद्यामनितरसुलभां वैदुषीमेत्य यो मे ।
बाल्ये तत्तन्त्रतत्वं निरुपममदिशत्तातपादः कृपातः
स श्रेयो मे विदध्याद्गुरुमणिरनघो रामभद्रार्यसूरिः ॥
त्रिस्कन्धे ज्यौतिषेऽथ श्रुतिमकुटनये शब्दतन्त्रे च काव्ये
सालङ्कारे कवित्वे निपुणतममतिर्योऽग्रजोऽग्र्यांशुकाद्यैः ।
मां संपोष्य प्रमोदाच्छ्रुतिनयननयं पूर्णमध्याप्य साहृद्यं
नानारूपं व्यतानीत्स जयतु गणकाधीशगोपालसूरिः ॥ १०

समाप्तो ग्रन्थानुबन्धः

॥ श्रीः ॥

# श्रीभार्गवीग्रीवाभरणम्

(पूर्वतोऽनुवृत्तम्)

निबन्धा—महामहोपाध्यायो, मद्रप्रान्तास्थानकविः पण्डितराजः,

कृष्णमूर्तिशास्त्री, मधुरा.

[illegible]त्यन्तव्यतिषङ्गतस्स्वमहिमन्यास्थां दधद्दृग्युगं
नीलेन्दीवरसुन्दरं तव दयाकल्लोलमालाकुलम्।
[illegible]ष्णुं स्वात्मवशङ्करिष्णु वलनादव्याजमानोज्ञका-
न्मातः! खञ्जनमञ्जनाञ्चिततया न्यक्कुर्वदाद्योतते ॥ ५१ ॥

[illegible]क्ष्मि! श्लक्ष्णकटाक्षवारिदघटां पीयूषनिष्यन्दिनीं
कुर्वाणामधिकारिणं त्रिजगतां संरक्षणे शार्ङ्गिणम्।
[illegible]र्णामर्णवकन्यके! करुणया संसारदावानल-
प्लुष्टे मय्यभिवर्षयाष्टवसुमय्यस्मिन्ननन्यर्भके ॥ ५२ ॥

[illegible]त्रद्वन्द्वमुपेन्द्रसुन्दरि! रसैस्सान्द्रं मनोहारिभि-
र्भ्राम्यत्तारकमात्मभूजयधनुर्भ्रूवल्लिलीलागृहम्।
[illegible]लाब्जं न निमीलतीदमनिशं भास्वत्यपि प्रोज्ज्वले
पत्युर्नेत्रमसौ विधुस्तव भृशं प्रेमास्पदं सोदरः ॥ ५३ ॥

[illegible]रळ्यं हृदयङ्गमं तव दृशोर्मातस्सदाचार्ययो-
रभ्यस्यापि चिरं ग्रहीतुमुदधेः कन्येऽक्षमा सर्वथा।
[illegible]यस्या स्म निलीयते हिमरुचावेका कुरङ्गी ह्रिया
रक्षन्नेष ततः प्रभृत्यभजत स्थास्नुं मृगाङ्काभिधाम् ॥ ५४ ॥

[illegible] मङ्गळरङ्गधाम्नि वदने फुल्लाम्बुजस्पर्धिनि
क्रीडानृत्यकृते रतिर्मनसिजः श्लिष्टाविमौ दम्पती।
[illegible]यद्भृङ्गयुगायिताक्षि मिषतस्संस्थापयामासतु-
र्जेतारौ जगतीत्रयस्य सहजे! जैवातृकस्य, ध्वजम् ॥ ५५ ॥

[illegible]ङ्कारं पुरुषोत्तमेऽसुरगणे वीरं, पदाब्जं श्रिते
त्वव्याजं करुणं, विचित्रजगतस्स्वेच्छाधिपत्येऽद्भुतम्।

हास्यं भर्तृनियन्त्रणे, भृशमसत्स्वत्यन्तरक्तौ च स-
त्स्वौदासीन्यविधौ भयानकमभिव्यङ्क्तो दृशाविन्दिरे ॥ ५६ ॥
चन्द्रादूर्ध्वमपीयमश्रुतचरी विद्युत्त्वतां संहति-
भृङ्गाणां कमलोपरि स्फुरणिनां मौनं तथा नूतनम् ।
रुक्मश्रीकसुकेतकालकभरे ! ऽजीर्यन्मृगाङ्कादरे !
शङ्कामङ्कुरितामिमां व्यपनय प्राणप्रिये ! शार्ङ्गिणः ॥ ५७ ॥
व्यालोला ललितालकास्तव घनश्यामा विशीर्णैस्सुमैः
कैतक्या शिखया दरानृजुनिजस्फूर्त्या मनोहारिणः ।
सौभाग्यं गगनस्य यावदुडुभिश्चान्द्र्या तथा लेखया
सर्वं तद्दळहस्तयन्त्यपकृपं मातर्नृसिंहप्रिये ॥ ५८ ॥
नीचां यामुनवीचिमाविलमलं धाराधराणां गणं
हीणं स्त्रैणमळिव्रजस्य सहसानीशश्च नैशं तमः ।
पश्चाऽरञ्जनमञ्जनं विदधते नीलालकास्ते रुचा
किङ्किङ्कुर्युरिमेऽनृजुप्रकृतयो न स्वाभिमानाद्वद ॥ ५९ ॥
चञ्चत्स्वर्णसवर्णचम्पककचप्राग्भार एष स्फुर-
द्विद्युद्वारिदगर्वसंहृतिविधौ वैदग्ध्यमभ्युद्वहे ।
लब्ध्वा त्वद्वदनारविन्दमिदमभ्यालक्ष्य सम्पातिनां
भृङ्गाणां समवाय इत्यपि मतिं तन्वन्समुद्दीप्यते ॥ ६० ॥
त्वद्गङ्गाङ्कतरङ्गसङ्गसुभगां श्रीमत्कळिन्दात्मजां
नीलाश्मावळिकोमळोर्मितरळां लावण्यजन्मस्थलीम् ।
फुल्लन्मल्लिमतल्लिकाकबळिता सेयं कबर्यम्बिके !
रूपे नानुकरोति केवलमपि त्वामोदतो माद्यति ॥ ६१ ॥
सर्वं शार्वरमिन्दुरन्धतमसं निष्कासयेज्ज्योत्स्नया
सत्या व्याप्तिरियं तथापि कमपि ब्रूमो विशेषं बुधाः ।
सौगन्ध्यं तमसो यदि, ध्रुवमयं दित्सेत्पदं स्वोपरी-
त्यम्ब ! त्वद्वदनालकद्वितयसंस्थावावलोकाद्वयम् ॥ ६२ ॥
आकारस्सुमनोहरः परिमळोऽनल्पस्तथा भार्गवि !
स्वाद्यश्चाधरमध्वहर्निशमिति त्वद्वक्त्रपङ्केरुहे ।
लीनौ द्वौ भ्रमराविति श्रुतवतामाभाति लोभाहता
भृङ्गाणां कबरीमिषेण परिषत्कौतस्कुतानामियम् ॥ ६३ ॥
(द्वौ भ्रमरौ चक्षुषी)

(को)तर्येण हि कुन्दकुड्मलरदश्रेण्यास्सरस्वत्सुते !
मल्लीराजिरशिश्रियत्स्वशरणं गाढान्धकारभ्रमात् ।
न्तैताश्च बहिः प्रकाशयति ते कैश्यं दयादुर्विधं
स्वाङ्कस्थां मलिनात्मनां हि शरणीकारः करोत्यापदम् ॥ ६४ ॥

रागादभ्यधिकात्स्वभूःकररुहै रत्नोर्मिकोल्लासिभि-
स्सद्यःखण्डितदन्तिदन्तसुभगे गण्डस्थले लक्ष्मि ! ते ।
दग्ध्यैकफलं मनोज्ञमकरीपत्रं विलिख्यान्वहं
श्रीवत्सेन सह स्ववक्षसि रहस्तत्स्पर्धयत्यद्भुतम् ॥ ६५ ॥

श्वन्मेचकचञ्चरीकचिकुरे ! प्रेङ्खत्सुमस्रग्भरे !
सम्फुल्लस्थलपद्मकोमळरुचिः पत्रीव्रजप्रोज्ज्वलः ।
ताटङ्कप्रभवप्रभोर्मितरळः श्लक्ष्णः कपोलो महा-
न्रङ्गः प्रस्फुरति स्वनर्तनकृते सौन्दर्यराज्यश्रियः ॥ ६६ ॥

सद्यो दारितदाडिमोदराशयभ्राजिष्णुबीजव्रज-
स्निग्धच्छायचिरत्नरत्नमहसां ताटङ्कयोरङ्कुरैः ।
क्लिह्यद्भिर्भृशमब्धिजे ! मकरिकापत्रश्रिया गण्डयो-
र्नृत्यं हेमसमाभयोर्हि विहितं पश्यन्हरिस्तृप्यति ॥ ६७ ॥

कुर्वाणं मणिदर्पणं स्वकिरणैर्ह्रीणं कपोलस्थलं
पश्चात्स्कन्धविलम्बिकुन्तळमपि ज्योतिर्झरै रञ्जयन् ।
ताटङ्कस्स्मृतिमातनोति सुतरामुद्गम्य दुग्धाम्बुधे-
र्व्योमोपस्पृशतोऽम्बिके ! क्वचित्तं बालस्य तिग्मद्युतेः ॥ ६८ ॥

औन्नत्यान्महितद्युतिं तिलसुमप्रख्यां श्रये नासिकां
सत्वं मूर्तमिव स्फुरामि जनिशुच्यस्मीति मुक्ताफलम् ।
रागस्स्यादधरप्रसङ्गत इति त्रस्यद्भृशं कम्पते
मानोत्सेधवतां भवत्यनुपदं भीतिस्समस्तेष्वपि ॥ ६९ ॥

भासा बिम्बफलं बलादधरयत्येतन्निरुक्त्याधरः
पत्युस्तेऽम्ब ! मधुद्विषोऽपि मधुनिष्यन्दैर्हृदावर्जकः ।
मूर्ता रागसमष्टि रोष्ठमिषतो मन्दस्मितज्योत्स्नया
कोऽपि प्रस्फुरतीह भार्गवि ! सुधापूर्णो मणीसम्पुटः ॥ ७० ॥

का (को) टीरोद्यदनर्घरत्नमहसामानृत्यतां सर्वतोऽ
प्यङ्कूराश्च विचित्रवर्णनिकरोद्गारैर्मनोहारिणाम्।
आश्लिष्टाः फणिराजशीर्षमणिनिर्गच्छद्रुचां राजिभिः
पत्युर्वक्षसि लक्ष्मि ! ते विदधते नूत्नं किमैन्द्रं धनुः ॥ ७१ ॥
किञ्चिन्न्यञ्चितकुञ्चितालकगतं कृत्स्नञ्च मानोन्नकं
मा हार्षीदितराङ्गलक्ष्म्य*नुपमं सर्वस्वमेतद्धि मे।
इत्थं भीषयितुं बिभर्त्यसिलतां श्रीः फाललास्योत्सुका
भ्रूमध्योत्थितसूक्ष्मगारुडदृषल्लेखाललामच्छलात् ॥ ७२ ॥

(*लक्ष्मीशब्दो ङ्यन्तोऽपि)

त्वां मूलप्रकृतिं गुणत्रयमयीमाम्नायशीर्षाण्यम-
न्याहुर्ब्रह्म परं श्रितां द्विविधशक्त्युल्लासिनीं दुर्ग्रहाम्।
सर्वोऽयं परिणाम एव जननि ! द्वैतप्रपञ्चः स्फुर-
त्यस्मद्वाङ्मनसातिगात्ममहिमन्यास्थां दधत्यास्तव ॥ ७३ ॥
पद्मे ! वेद्मि न मन्त्रशास्त्रमनघं यत्र स्वयं क्रीडसि
ह्लादैकास्पदमेकमाकलयितुं श्लोकं न शक्नोम्यहम्।
शास्त्रं त्वम्ब ! बिभेति मत्समधिकं, भक्तिः खपुष्पायते
किं कुर्यां बत ! वञ्चितोऽहमभवं तुष्णया केवलम् ॥ ७४ ॥
दारिद्र्यं परमौषधं हि विदुषामित्येतदास्तां वचो
वैदुष्यस्य च गन्धमप्यहमिहाघ्रातुं जनुष्यक्षमः।
सत्येवं कथमम्बिकेऽनुभवितुं दारिद्र्यदुःखं परं
सज्जः स्यां कमलालये ! कथय मे पृच्छाम्यहं तेऽर्भकः ॥ ७५ ॥
ज्ञानञ्चद्विमलं धनैरलमिति व्याहार एव श्रियोऽ
लाभेनेह विरज्यतां जगति, तन्नैवादरार्हं मम।
चिद्रूपोऽपि हरिर्जहाति भवतीं नैवाम्ब ! वेत्सि स्वयं
सर्वे सन्ति परोपदेशकुशलाः श्रीमत्समुद्रात्मजे ॥ ७६ ॥
विद्वांसः कति नाम लक्ष्मि ! समुपन्यस्यन्ति कामार्थयो-
रस्थैर्यं बहुदोषवत्त्वमपि च स्वैरं पुरः श्रीमताम्।
आयासस्य च तावतः कतिपयद्रव्यग्रहोऽन्ते फलं
नैवं वास्तवधर्ममोक्षरसिका मिथ्याविरक्ताः परम् ॥ ७७ ॥

अस्मिञ्जन्मनि जातरूपसुभगच्छाये सुजाये! हरे-
र्नापाराध्यमराळकेशि! पृथुकस्तुभ्यं मनागप्यहम्।
यज्ज्ञानकृतं भवेत्किमपि तत्क्षन्तुञ्च किन्नार्हसि
क्षेमं मातृतिरस्कृतस्य भुवि मे गत्यन्तरं वा कथम्॥ ७८॥
आलस्येन मदालसे! न करवै कर्माग्निहोत्रादिकं
विक्षिप्ते हृदि मेऽधिकं त्वयि शुभा भक्तिः कथं वोद्भवेत्।
ज्ञानं व्योमसुमोपमं मम जगन्मातर्ह्यशुद्धात्मनः
सम्यग्रोदितुमद्य वेद्मि पुरतस्ते पाहि पाथोधिजे॥ ७९॥
गोभूधान्यहिरण्यवेश्मकलभस्त्रैणाश्वसम्पत्तिभिः
पापाचारपरान्रमे! भुवि नरानावर्धयस्यादरात्।
तस्तु त्वं विमुखा न केवलमपि त्वत्यन्तनिस्स्वत्वम-
प्याधायामितकौतुकेन महतो दुःखाकरोष्यम्बिके॥ ८०॥
पृच्छायां च सुधाम्बुधेः प्रियकुमार्यम्ब! त्वमित्थं वदेः
"पूर्वोपार्जितपुण्यकर्मविरहे नाहं "प्रदद्या" मिति।
नैतच्चारु, विचित्रमस्तनियतिस्वातन्त्र्यमाबिभ्रतां
दाराणां जगदीश्वरस्य न यतःकर्माद्यपेक्षोचिता॥ ८१॥
प्रस्तावीद्भवतीं शुभैःकतिपयैः पद्यैश्शिशुश्शङ्करो
भिक्षार्थ्यामलकं किमप्यतिचिराच्छुष्कं ददत्याः कृते।
तस्याः पूर्वकृतान्युपेक्ष्य दुरितान्यम्ब! प्रसन्ना द्रुतं
हैमान्यामलकान्यवर्ष इति यन्न्याय्यं कथं तद्भवेत्॥ ८२॥
भुक्त्वा मुष्टिमितं सुदा(धा)मपृथुकं तृप्ता सह प्रेयसा
सद्यस्तं धनदं चकर्थ पृथिवीदेवं दयाशेवधिः।
किन्तां त्वं द्विजपूर्वजन्मवृजिने नैवाकरोरिन्दिरे!
शक्तिः कर्तुमकर्तुमन्यथयितुं जागर्ति तेऽव्याहता॥ ८३॥
स्तोकं वा करुणामृतोर्मितरळं श्रीमत्कटाक्षं महा-
लक्ष्मि! द्राग्व्यतिषज्जयामितमघं सद्यस्समुन्मूल्य मे।
विश्राम्येष न तेऽर्भकोऽङ्घ्रिकमलं लोकैकमातर्मुदा
राज्ये स्थापय दीनमेनमथवा गर्ते क्रुधा पातय॥ ८४॥
हेतुस्तेऽपि पुरो व्यजिज्ञपमहं सप्रश्रयं प्रार्थनां
कर्णे नाचकलत्कलाधरमुखि! त्वत्तुल्यचेता हि सः।

तुङ्गं शृङ्गमहीश्वरावनिधरस्याध्युष्य संहृष्यतोः
दम्पत्योर्भुवि मादृशो नरकृमेः श्रूयेत नार्तस्वरः ॥ ८५ ॥
ग्रावापि द्रवतां व्रजेत्स्फुरदुरुग्रीवामणिस्रग्भरे !
दीनाक्रन्दमिमं निशम्य सहसा मीनायमानेक्षणे ।
वाचामस्तु फलोदयस्स्तुतवतो मोचासमानां मम
श्रान्तं निस्स्वतयाव मां सकरुणं स्वान्तं मयि क्षिप्यताम् ॥ ८६ ॥
शङ्काद्या निधयश्चकासति नवाप्यम्बानिशं त्वद्वशे
कालक्षेपकृते धनैककणिकात्यागेन हीयेत किम् ।
विष्वग्व्यापकपुष्कलादिजलमुङ्मालैकमम्भःकणं
मोक्तुं चातकपक्षिणो गलबिले त्रस्येत्किमालोचय ॥ ८७ ॥
स्वाभाव्याद्वनिता विभान्ति सदयास्तत्रापि या मातर-
स्ता मूर्ताः करुणा इति त्वयि जगन्मातर्यसौ नः पिता ।
ऐश्वर्यं हरिरार्पिपन्निरवधि त्रातुङ्किलास्माञ्शिशू-
स्तन्मे प्रेरयितुं समस्त्यधिकृतिर्याञ्ञा तु नावश्यिका ॥ ८८ ॥
किङ्किं सोऽहमहो ! अभाषिषि हृषीकेशप्रियायाः पुरः
श्रुत्यन्तैरपि मृग्यमाणचरणे ! दर्पाद्विमूढाग्रणीः ।
लक्ष्मि ! त्वं कृपयापराधमखिलं क्षाम्य प्रणौम्यन्वहं
त्वामेकं शरणं वृणोम्यभयदा भूयास्सदा सादरम् ॥ ८९ ॥
मन्दे मय्यरविन्दसुन्दरि ! दृशाविन्दीवरश्रीमुषौ
कारुण्यामृतवीच्युदञ्चितनिजप्रान्तात्विषौ पातय ।
"सा हि श्रीरमृता सता"मिति समाम्नाताधि(जि)ह्वं ममा-
वश्यं वश्यतमा च" नर्तनविधौ श्रद्धत्स्व विद्यात्मिके ॥ ९० ॥
बाह्यं साधनमस्ति मे न किमपि त्वं वेत्सि चैतत्स्फुटं
तस्मात्स्वीकुरु मानसीमनलसः कुर्वीय पूजां तव ।
प्रादुःष्युर्बहवश्च तत्र नियतं भ्रंशास्तितिक्षस्व ता-
न्हन्त ! त्वं मम वागुरानिपतिता कर्तुं किमप्यक्षमा ॥ ९१ ॥
अम्ब ! त्वामुपवेशयामि नृहरेर्भार्ये ! मृगेन्द्रासने
रत्नस्तम्भमणिप्रदीपसुभगश्रीमण्टपस्थापिते ।
अर्घ्यं श्लाघ्यमनर्घशीलमहिते ! स्तात्पाद्यमाचाम ल-
क्ष्म्यम्भश्शम्भुशिरस्स्फुरत्सुरसरित्स्रोतोहृतं भक्तितः ॥ ९२ ॥

[illegible]सीनां मदनुज्ञया मुनिमनःपाथोजभास्वत्प्रभा-
मम्भःप्लावितपूतमानससरस्सोपानमध्ये मुदा।
[illegible]तोत्क्षिप्तसुवर्णकुम्भसुभगावभ्रेभतुल्यप्रभौ
सज्जौ द्वावभिषेक्तुमम्ब! कलभौ त्वत्पार्श्वयो राजतः॥ ९३ ॥

[illegible]मं लक्ष्मि! सुवस्स्व हंसमृदुळं सौवर्णतन्तुज्वल-
त्प्रान्तं, श्रान्तमिव त्वदङ्गमसृणच्छायामुदीक्ष्य ह्रिया।
[illegible]ग्धश्वोत्तममुत्तरीयमधिपे! रायां गृहाणादरा-
त्स्वैरं भूषय भूषणानि दयया सौन्दर्यमय्यम्ब! मे॥ ९४ ॥

[illegible]लक्ष्म्यै नम ओं समस्तजगतां मात्रे प्रकृत्यै नमः
[illegible]पत्न्यै श्रीपुरुषोत्तमस्य नम ओमब्धेर्दुहित्रे नमः।
[illegible]यं नामसहस्रमाश्रितपरित्राणैकबद्धादरे!
[illegible]विस्पष्टं समुदीरयन्सुरतरोः पुष्पैस्समर्चाम्यहम्॥ ९५ ॥

[illegible] कालागरुधूपसौरभभरानाघ्रापयाम्यम्बिके!
भक्त्या कामधुगाज्यवर्तिमहितं दीपञ्च सन्दर्शये।
[illegible] तेऽद्य निवेदयामि सघृतं भक्ष्यैश्च शाल्योदनं
साकं पक्वफलैर्गृहाण बहुळं ताम्बूलमेलादिभिः॥ ९६॥

तुभ्यं भार्गवि! नीरजस्कमनसे कर्पूरनीराजनं
वीणावेणुमृदङ्गवाद्यनिवहैरस्तु श्रुतिह्लादिभिः।
नृत्यैरप्सरसां भव प्रमुदिता गीतैर्मनोहारिभि-
श्छत्रं चारु समर्पयामि सुभगस्त्वां चामरैर्वीजयन्॥ ९७॥

[illegible]नारार्बुदमर्पयाम्युपहृतिं शङ्खादिनिध्यात्मिके!
तन्वे भक्तियुतः प्रदक्षिणनमस्कारान्स्वपद्यैः स्तुवन्।
पश्यंस्त्वां करुणारसोर्मिळदृशं त्राणे पुरो जाग्रतीं
नृत्याम्यद्भुतमात्तकौतुकमहं स्वर्योषितो हासयन्॥ ९८॥

[illegible]क्तु दुःखपरम्परां परमिदं जन्माग्रहीषं रमे!
यावज्जन्म च दित्ससे भवतु मे तावत्ततो वाधिकम्।
[illegible]न्तु त्वत्पदपङ्कजेऽस्तु सुदृढा भक्तिश्च जन्मान्तरे-
ष्वित्येकं परमं वृणे वरमहं कामं समापूरय॥ ९९॥

[illegible]त्सल्यात्पृथुके तरङ्गय कृपापाङ्गं त्वदुत्सङ्गभा-
[illegible]! [illegible] भाति तथा संविदम।

आरोग्यं दृढगात्रताञ्च विदधत्यत्यादरान्मेऽर्भका-
न्याह्वास्थानकवेर्ममापि गुरुतां कुर्याः क्षितौ शाश्वतीम् ॥ १०० ॥
आनेदेश्मुखमुन्षिकङ्ङुजुनयविच्छ्रीराजमन्नामुखा-
मान्यास्संस्कृतमातृकिङ्करतया जीव्यासुरब्दाङ्शतम् ।
राजाजीजवहर्पटेल्प्रभृतिभिः श्रीगान्धिमार्गानुगै-
र्माता भारतभूमिरुत्तमगुणैः पुत्रैर्विजेजीयताम् ॥ १०१ ॥

ॐ तत्सत्

इति महामहोपाध्यायस्य मद्रप्रान्तसंस्कृतास्थानकवेः पण्डितराजस्य कृष्णमूर्तिशास्त्रिणः कृति
श्रीभार्गवीग्रीवाभरणं समाप्तम्

॥ श्रीः ॥

# ज्योतिश्शास्त्रविचारप्रकटना

अयि भोः शास्त्रोक्तकर्मानुष्ठानधुरीणाः आस्तिकमहाशयाः भचक्रलम्बनादिकारणैः तदा तदा ग्रहगतिवैषम्यं किञ्चित् किञ्चित् दृश्यते। अतः सूर्यसिद्धान्तोक्तः कालः व्यभिचरति ॥

यदा ग्रहगतिवैषम्यं दृश्यते तदा दृक्साम्यकरणार्थं बीजफलादिसंस्कारान् कृत्वा मिथ्या शास्त्रविरुद्धसावयवबाणघटीवृद्धियुक्तं सावयवत्रिनाडीक्षययुक्तं पक्षमेवाश्रित्य आर्यभटभास्कराचार्यवररुच्यादयः ग्रन्थान् निर्ममिरे ॥

ग्रहलाघवग्रन्थकालादनंतरं अस्मिन् भरतखण्डे दृक्साम्यप्रतिपादकग्रन्थनिर्माणकार्ये बहवो न प्रायतन्त। केचन प्रयत्नं कृत्वापि नाशक्नुवंश्च ॥

एतादृशे काले विदेशीयाः आङ्ग्लज्योतिर्विदः सर्. ऐझक् न्यूटन्, हन्सेन्, लवेरियल्, न्यूकंब, प्रभृतयः ग्रहणसमागमादयः स्वोक्तकाले यथा दृग्गोचरा भवेयुः तथा स्वोपज्ञविषयान् अस्मच्छास्त्रोदितान्, शास्त्रविरुद्धांश्च बहून् संस्कारान् भिन्नभिन्नमर्यादया व्यरचयन् ॥

तदेवानुसृत्य श्रीमन्तः केतकर वेङ्कटेशबापूजीदैवज्ञाः केतकीयं ग्रहगणितं, ज्योतिर्गणितं इत्यादिकान ग्रन्थान् व्यरीरचन् ॥

आङ्ग्लमार्गानुसरणात् केतकीयग्रन्थेऽपि शास्त्रविरुद्धसंस्काराः शास्त्रानुक्तसंस्काराः युक्तियुक्ताः शास्त्राणामविरुद्धाः संस्काराश्च वर्तन्ते ॥

तद्यथा—केतकीये ग्रहगणिते चन्द्रस्फुटप्रकरणे अस्मत्प्राचीनसिद्धान्तोक्तः अर्कबाहुफलसंस्कारः प्रतिपादितः। किं च अर्कबाहुफलेनैव तद्विरुद्धः विरुद्धचिह्नरविफलाख्यः शास्त्रानुक्तः शास्त्रविरुद्धः अन्यः संस्कारः क्रियते एतदसमञ्जसम्। कथमिति चेत् रविकेन्द्राभिमुखतया चन्द्रमाकर्षन् अर्कबाहुफलसंस्कारः चन्द्रे धनफलकलासूचको यदा भवति—तदा अनेनैव अर्कबाहुफलेन

रविकेन्द्रतिरोमुखतया चन्द्रोत्सारणकार्यकारी ऋणफलकलारूपः प्राचीनसिद्धान्तेष्वनुक्तः विरुद्धचिह्नरश्मिफलाख्यः संस्कारो भवति इति यत् तत् युक्तेः (न्यायस्य) शास्त्रस्यापि विरुद्धम् । अतः विरुद्धचिह्नरविफलसंस्कारः दुष्टः ॥

किञ्च केन्द्रच्युतिरित्येकः संस्कारः सिद्धान्तेष्वनुक्तः क्रियते ॥

अन्यच्च—मध्यमग्रहास्सर्वेऽपि क्रान्तिवृत्तस्थाः तथैव मन्दोच्चानि मन्दफलानि क्रान्तिवृत्तीयानि । एवं सति स्फुटः क्रान्तिवृत्तीय एव भवितव्यः । एषां ग्रन्थे तु "विक्षेपवृत्तात् क्रान्तिवृत्तस्य परिणामो भवितव्यः । अतः परिणतिफलसंस्कारः करणीय इति"—विपातचन्द्रेण संस्कारफलकलाः सङ्गृह्य चन्द्रे संस्क्रियन्ते ।

न्यायविरुद्धत्वादयं संस्कारः दुष्टः ॥

अन्यच्च—ग्रहणप्रक्रियायां चन्द्रस्फुटीकरणसमये विरुद्धचिह्नरविफलसंस्कारः एकविधः ग्रहसमागमकाले अयमेव संस्कारः अन्यविधः स्फुटो भिन्नभिन्नः । एककालावच्छेदेन सञ्जातयोः ग्रहणसमागमयोः भिन्नभिन्नरूपस्फुटचन्द्रसाधने कतरस्य प्रामाण्यं? कस्साधुः?

अपि च आङ्गलमार्गे तिथेः दशघटीक्षयसद्भावात् स्मार्तैकादशीव्रतलोपप्रसङ्गश्च भवति ॥

तद्यथा—दशमीघटिकाः षोडश परेद्युः एकादशीघटिकाः षट् उपरि द्वादशीघट्यः एकपञ्चाशत् पश्चात्त्रयोदशी अत्र तावत् ॥

> एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
> त्र्यहस्पृक् तदहोरात्रं नोपोष्यं तत्सुतार्थिभिः ॥ इति ॥

वचनेन स्मार्तानां परदिने उपवासनिषेधः (कृतः) पूर्वेद्युरेव भवतु, का हानिरिति चेत् ॥

> अविद्धान्यनिषिद्धानि न लभ्यन्ते दिनानि तु ।
> मुहूर्तपञ्चकैर्विद्धाप्युपोष्यैकादशीतिथिः ॥

इति ऋश्यशृङ्गवचनेन दशघटिकाकालपर्यन्तं दशमीविद्धायाः ग्राह्यत्वं तदुपरि सद्भावे त्याज्यत्वं च स्यात् ॥

इदानीं पूर्वस्मिन् दिने दशघटिकाधिकदशमीसद्भावात् उपवासाभावः परस्मिन् दिने तिथित्रयसद्भावादुपवासाभावः। दिनद्वयेऽपि निषेधसद्भावात् एकादशीव्रतलोपप्रसङ्गः। अतः आंग्लैः साधिताः "सप्तवृद्धिर्दशक्षयः" इत्याकारकवृद्धिक्षययुक्ताः तिथिघटिकाः दुष्टास्त्याज्याश्च ॥

अत्रैकः पूर्वपक्षः केषुचित् ग्रन्थेषु दृक्सिद्धग्रहसंसाधित तिथ्यादीननुसृत्य कर्म अनुष्ठातव्यमित्युक्तत्वात् वाक्यगणितमिति यत् तत् तत्कालस्थितदृग्गणितत्वात् तदनुसृत्य तदारभ्य कैश्चित् वाक्यगणितानुष्ठानात् अधुना वाक्यगणिते दृक्सिद्ध्यभावात् आंग्लसाधितगणितमेव स्वीकृत्य कर्मानुष्ठानं कुर्मः इति ॥

आर्षवचनविरोधादयं पूर्वपक्षः दुष्टः।

अत्रोच्यते वाक्यगणितरीत्या सावयवबाणवृद्धिरसक्षययुक्ततिथिघटिकाः लभ्यन्ते अतस्तायुक्ताः।

तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि।
तावान् ह्रासश्च पूर्वेद्युरिति शातातपोऽब्रवीत् ॥

अत्र परेऽहनीत्युक्तत्वात् पूर्वदिनतिथ्यपेक्षया यावान् ह्रासो वृद्धिर्वा तावान् ह्रासो वृद्धिः पूर्वेद्युः दृक्सिद्ध्यर्थं कल्पनीयः न त्वधिकतरां इत्यर्थः ॥

वाक्यगणितं मन्दफलसंस्कारेण सावयव-बाणवृद्धि-रसक्षयपक्षीय तिथिलाभात् सूर्यसिद्धान्तसाधिततिथ्यन्तघटिकापेक्षया सावयवषड्घटिकान्तरालिकघटिकाप्राप्तेश्च वाक्यघटिकाः शास्त्रीयाः॥

"सप्तवृद्धिर्दशक्षयः" इत्याकारकहूणगणितेन सूर्यसिद्धान्तसंसाधिततिथ्यन्ततिथ्याद्यपेक्षया कदाचित् १३ त्रयोदशघटिका व्यत्यासाप्तेः पूर्वोक्तवचनविरोधात् आंग्लपक्षो न स्वीकार्यः। इत्यनेन त्वदीयपूर्वपक्षो निरस्तः। इति ॥

पुनरप्येकः पूर्वपक्षः—ननु बाणवृद्धिरसक्षयपक्षे दृक्प्रत्यक्षत्वाभावात् अयं क्रमः त्याज्यः नानुष्ठेय इति कृतस्य वादस्य समाधानं त्वया नोक्तमिति चेत् तदपि प्रोच्यते

ग्रहलाघवकालादनन्तरं एतावत्कालपर्यन्तं बाणवृद्धिरसक्षयपक्षमाश्रित्य दृक्सिद्धकालसाधकं गणितं आसेतुहिमाचलपर्यन्तवर्तिनः भारतीयाः केऽपि पण्डिताः कर्तुं न शेकुः ॥

इदानीं तावत् आंग्लपाण्डितैर्बहुभिस्संस्कारैः संसाधितः यः क्रान्तिवृत्तीयः पर्वान्तकालः वर्तते स एव कालः एकविघटिकाकालेनाप्यव्यभिचरितस्सन् शास्त्रीयभुजान्तरोदयान्तरचरदेशान्तरबीजफलैः संस्कृतमध्यग्रहात् केवलमन्दसंस्कारादेव यथा संसिद्ध्यति तथा ॥

एकेन मान्देन तु कर्मणात्र स्फुटौ भवेतां रविशीतभानू ।

इत्युक्तसिद्धान्तवचनानुसारी बाणवृद्धिरसक्षयपक्षघटकसद्दृग्गणितक्रमः भगवतः सहस्रमयूखमालिनः सूर्यस्य अनुग्रहादुपलब्धः । अतस्त्वदीयः पूर्वपक्षः निरस्तः ॥

विद्वत्सज्जनकृपाभिलाषी, ज्योतिःसिद्धान्तकेसरी

वेंकटसुब्बाशास्त्री,

आस्थानविद्वान् कोळ्ळेगालनिवासी

॥ ओम् ॥

॥ नमः शिवाय सुब्रह्मण्याय नमो नमः ॥

# विद्वदभ्यर्थना

अयि भोः विद्वद्वरेण्याः वेदैकधनाश्च आस्तिकशिखामणयः, न खलु अनवगतं इदं समेषां तत्र भवतां पण्डितप्रकाण्डानाम् । यत् खलु कलिमहापुरुषप्रभावात् नवीनलोकपरिष्कृतिविभवात् शरीरयात्रानिर्वहणपरिक्लेशाच्च वेदविद्याध्ययनकुतूहलिनः शतस्य पञ्चषा अपि विरळा इति नेयमत्युक्तिरिति । तत्रापि, " शतेषु जायते शूरः सहस्रेषु च पण्डितः " इत्युक्तरीत्या प्रौढग्रन्थपरिशीलनोत्सुक एकोऽपि दुर्लभ एवत्युक्तिः अनुवादमात्रम् । ईदृश्यास्तु वेदविद्यायाः परिपोषणार्थाः महामुनिप्रणीताः शिक्षादयो ग्रन्थाः अपरिमिता एव । ते च ग्रन्थाः प्राचीनैः तालपत्रेषु रेखात्मना सङ्गृहीताः अधुनातने काले नवनागरिकताभिनिविष्टचित्तानां बहूनां स्वरूपतोऽपि नानविषयतामापन्नाः (श्रवणगोचरतामनापन्नाः) केषाञ्चिदेव गृहेषु वर्षस्यैकवारं शरन्नवरात्रीयमूलनक्षत्रपुण्यकालिकसरस्वत्यावाहनकाल एव सूर्यकिरणैः सम्पृच्यन्ते, वायुना च पवित्रीक्रियन्ते । अपि च विज्ञपुरुषद्वारा कीदृग्विषयगर्भितोऽयं ग्रन्थ इति विज्ञातुं वा, विषयाभिज्ञेभ्यो यथाग्रन्थगौरवं उपयोगायार्पयितुं वाऽपि अनिच्छद्भिः कैश्चिन्महात्मभिः तेऽमी तालपत्रात्मकाग्रन्थाः महानदीजले प्रोह्यन्ते अग्निसाद्वा क्रियन्ते, अन्ततो वम्रीमुखे वा क्षिप्यन्त इति महदेतच्छोचनीयतास्पदं, साम्प्रदायिकाध्ययननिरतानां छात्राणां प्रवक्तॄणां च । सुपरिष्कृते नवयुगेऽप्यस्मिन्काले गोप्यं गोप्यमिति कृत्वा यत्पुस्तकान्यपि न प्रकटीक्रियन्ते तदेतत् अध्येतृपुरुषदौर्भाग्याद्वा ? तत्तद्ग्रन्थानामेव कुतश्चित् शापविशेषाद्वा ? इति सुविमृशन्तोऽपि नान्तं गच्छामः ।

तत्रापि इयं दुरवस्था सर्वापि ऋग्वेदीयलक्षणग्रन्थानां सुसम्पन्नेति वचने नव्यानां दाशतयीपाठकानां शिरोऽवनमनमेव भूषणम् । शाखान्तरेष्विव ऋक्शाखायामपि—' समलक्षणम्, ' व्याळिशिक्षा ' ' जटालक्षणम् ' ' वर्णक्रमशिक्षा ' ' उपलेखा-

सूत्रम्' 'विकृतिवल्ली' 'पादानुक्रमणी' 'पदभैण्ट्' 'क्रमभैण्ट्' 'पदक्रमरत्नम्' 'चातुर्स्वरलक्षणमंजरी' 'वेदनीतिमंजरी' इत्यादयो नैकविधाः लक्षणग्रन्थाः, श्रीमता भगवता आचार्यशौनकेन- तदनुग्रहपात्रैरितरैश्च तच्छिष्यप्रकाण्डैः अध्येत्रनुग्रहाय प्रकटीकृता अपि, ते प्रायः प्राकाश्यमप्राप्यैव पूर्वोक्तविधया अग्निसात् जलसात् वा क्रियन्ते आखुवम्रीप्रभृतीनामाहारीक्रियन्ते वा न सूपयुज्यन्त इति महद्दौर्भाग्यमेतत् ऋक्शाखिसामान्यस्यापीत्यास्तामेतत् ।

प्रस्तुतमालोचयामः । प्रकृते प्रचिकाशयिषितेयं व्यालिशिक्षा परनाम्नी (अष्टविकृतिविवृत्तिरितिप्रसिद्धा) मधुसूदनशिक्षा, मैसूरु विराजमान श्रीमन्महाराजकीय महापाठशालायां ऋग्वेदोपाध्यापकपदवीमधिष्ठाय सम्प्रति भगवतो वेदनारायणस्य, पादमूलङ्गतानां विदुषां, वे. ब्र. श्रीयुत (आन्ध्राख्य) वेङ्कटराम घनपाठिनां मैत्रीमहिम्ना चतुर्दशवर्षेभ्यः प्राक् मया समासादिता। तदाप्रभृत्येव ईदृशग्रन्थरत्नस्य कथमपि प्रकटीकरणेन भगवतो वेदनारायणस्य वेदमूर्तीनां ब्राह्मणोत्तमानां च आशीरनुग्रहयोः पात्रीभविष्यामीति समुत्सुकोऽहं कालप्रतीक्षोऽवर्तिषि ।

तदानुरूप्येण च श्रीमन्महाराज संस्कृत कलाशालाध्यक्षपदमलङ्कुर्वाणानां, एतत्त्रैमासिकपत्रिकासम्पादकानां म. रा. रा. श्रीयुत डाक्टर् इत्यादि बिरुदालङ्कृतानां ए. एन्. नरसिंहार्य महोदयानां सरळगुणवैशिष्ट्यनिमित्ताऽभिमानातिशयविशेष एवातिनेदीयस्येव काले एतद्ग्रन्थप्रकाशने निदानभूत इत्ययं विषयः पुनरुक्तोप्यपुनरुक्त एव ।

अयं च ग्रन्थः पूर्वमेकवारं कलिकातानगरे श्रीयुत सत्यव्रतशर्म महोदयैः प्रकाशं नीतोऽपि सम्प्रति मुद्रणात् बहिरेव वर्तते।

अस्य अष्टविकृतिविवृतिग्रन्थस्य "व्यालिशिक्षा" "मधुसूदनशिक्षा" चेति नामद्वयं चकास्तीति पूर्वमावेदितम् ।

एतद्ग्रन्थकर्ता तु भगवतो व्याळ्याचार्यस्यानुग्रहपात्रं पूर्वाश्रमे 'मधुसूदनाचार्य' इति सुगृहीतनामा तुर्याश्रमे 'मस्करीति' प्रसिद्धिं गतो यतीन्द्र इति गम्यते ।

एतद्ग्रन्थपरिशीलनेन च एतन्मूलभूतं इतः प्राचीनं च ग्रन्थद्वयं 'नरसिंहजटालक्षणम्' 'हयग्रीवशिक्षा' चेति नाम्ना प्रसिद्ध-

मभूत् इति विज्ञायते । अत एव चैतद्ग्रन्थकारः उपलेखासूत्र-मूलकजटालक्षणग्रन्थकृतृणां नरसिंहसूरीणां सन्निहितसमनन्तर-कालिकः इत्यपि गम्यते ।

प्रायः चत्वारिंशद्वत्सरेभ्यः प्राक् मुद्रिते 'याजुष घन सन्धि' ग्रन्थे "घनचन्द्रिकाभिधव्याळिशिक्षागतानि कानि चन वाक्यानि संवादाय उट्टङ्कितानि दृश्यन्ते—तानि यथा—

शुक्लांबरधरं देवं नमस्कृत्वा च भारतीम् ।
व्याख्येयं व्याळिशिक्षायाः क्रियते घनचन्द्रिका ॥
व्याळिशिक्षां प्रवक्ष्यामि ब्रह्मणानुमतः पुरा ।
सहस्रवदनेनाहं सूत्रेण च समन्वितम् ॥
तत्र पूर्वं घनस्यैव प्रमाणं लक्षणं तथा ।
घनस्य च विधिं तत्र घनसन्धिं तथैव च ॥
एवमादि च यत्सर्वं तत्सर्वं वच्मि साम्प्रतम् ।
घन द्वादश सन्धिः स्यात् त्रयोदश पदं वदेत् ॥
त्रिक्रमे सप्तदशधा सन्धिरेवं विधीयते ।
यथास्वरं यथान्यायं यथावच्च सलक्षणम् ॥
य उच्चरेत् घनं सोऽपि तद्ब्रह्मत्वमवाप्नुयात् ।
जटावत् सन्धितः पूर्वं षडावर्तिः पदद्वयम् ॥
अनन्तरं चैकपदमेकवारं हि केवलम् ।
तत्पूर्वं द्विविधं तूक्त्वा चानुलोमे यथाक्रमम् ॥
पुनश्च मध्यमपदमारभ्यव्यमनन्तरम् ।
पूर्ववत् सन्धितः कुर्यात् घन एवं विधीयते ॥"

इत्येवंरूपाणि । परन्तु पूर्वोदाहृतव्याळिवाक्यानां एतद्-ग्रन्थेऽभावात्, पूर्वोक्तग्रन्थस्यापूर्णत्वाच्च, इतोप्यन्यो व्याळि शिक्षाख्यो ग्रन्थो वाक्यरूपोऽन्यरूपो वा वर्तेत इति वक्तव्यं भवति-कुत इति चेत्? एतद्ग्रन्थकृता मधुसूदनाचार्येणैव प्रकृतग्रन्थे "वैदिकश्लोकनीयाम्" "मस्करी चर्करीति" इत्युक्तेः, चर्क-रीति, इतरग्रन्थेभ्योऽतिशयेन कारिकारूपेण—इति विवरणाच्च प्राचीनग्रन्थस्य वाक्यरूपता अन्यरूपता वा अनुमीयते ।

अयं चात्र विशेषः । यत् हयग्रीवशिक्षावाक्यानां एतदीय-वाक्यानां च क्वचित् क्वचित् किञ्चिदिव अभिप्रायभेदसत्त्वेऽपि,

एतद्ग्रन्थकारः ज्याळ्याचार्यमतमेव प्राधान्येन युक्ततया स्वाभिप्रेतत्वेन च प्रतिपादयति । आस्तामेतत् पूर्वाचार्याणां तदभिप्रायाणां च भेदो जागर्तीति । सर्वथापि त्वयं "मधुसूदनशिक्षा" ग्रन्थः ऋक्शाखिनां. तत्रापि जटाघनादिविकृत्यध्येतॄणां च तत्तल्लक्षणप्रतिपादकतया अतीव श्लाघनीयः अध्येतृवर्गस्य अत्यन्तमुपकरोतीत्यत्र नास्ति सन्देहलवोऽपि । "वैदिकश्लोकनीयाम्' इति वदन्नाचार्यः एतमेवाभिप्रायं विशदयतीति स्पष्टम् ।

एतादृशामूल्यग्रन्थरत्नस्य कथंचित् सम्पादनसंशोधनादि रूपं, भगवतो वेदपुरुषस्य चरणसेवाफलं भगवदनुग्रहविशेषं महाजनाभिमानविशेषं च, श्रीमतां अस्मद्गुरुचरणानां महीशूरास्थानमहाविदुषां 'वेदरत्नम्' 'हौत्रशिरोमणिः' 'याज्ञिककेसरी' 'श्रौतकर्मधुरन्धरः' इत्याद्यनेकबिरुदावळीभूषितानां मैसूरु श्रीमन्महाराजकीय संस्कृत महापाठशालायां ऋग्वेदप्रधानोपाध्यायपदवीं अलङ्कृतवतां श्रौतस्मार्तलक्षणग्रन्थादिप्रवचनचणानां कीर्तिशेष वेदमूर्ति ब्रह्मश्रीयुत द्विवेदि "सुब्रह्मण्य शास्त्रि" महोदयानां चरणनळिनयोः उपायनीकृत्य, (कुर्वाणं) अत्र परिदृश्यमान दोषान् मयि स्थापयित्वा मामभिमन्तुमर्हन्ति वेदमूर्तयो विद्वद्वरेण्या इत्यभ्यर्थये ।

सम्पूर्णस्य सुशुद्धस्य मूलव्याळिशिक्षाग्रन्थस्य यत्र क्वापि उपलम्भे तत्प्रदानेन तत्प्रकाशने आनुकूल्यमारचयन्तु सन्त इत्याशासे ।

एतद्ग्रन्थप्रकाशनविषये सम्पूर्णसहानुभूतिपुरःसरं अस्मत्प्रवर्तकानां एतत्पत्रिकासम्पादकानां विश्रान्त संस्कृत महापाठशालाध्यक्षाणां म. रा. रा. श्रीयुत डा. ए. एन्. नरसिंहार्याणां, तथैव अद्यतनसम्पादकानां म. रा. रा. श्रीयुत एम्. आर्. वेङ्कटसुब्बाशास्त्रिणां, श्री चामराजेन्द्र वेदमहापाठशालाध्यक्षाणां वे. ब्र. श्री एन्. मल्लिकार्जुनशास्त्रि महोदयानां च, विशेषेण ग्रन्थदानादिभिः कृतसहायानां मैसूरु आस्थानविदुषां श्रीमतां नारायणस्वामिशास्त्रिणां, कुम्भघोण श्री कामकोटिपीठाधिपति संस्थापितपाठशालायामृग्वेदोपाध्यायपदवीमधितिष्ठतां ; श्रीयुत शान्तनूरु कृष्णमूर्ति घनपाठिनां शृंगगिरि शारदापाठशालाध्यापक

श्रीयुत शामभट्टानां, मथुरापुरीस्थ ऋग्वेदपाठशाला भूतपूर्वोपाध्यायानां कीर्तिशेष श्री सुन्दरघनपाठिनां, श्री चामराजेन्द्र संस्कृत महापाठशालाध्यापकानां आस्थानविदुषां श्रीमतां के. पि. शङ्कर शास्त्रिमहाशयानां च अनन्तप्रणामकृतज्ञतावेदनपूर्वकम् "।

सर्वस्याप्यस्य निदानभूतवैदिकमार्गपोषणैकपर श्रीमन्महीशूरमहाराजानां विषये हृत्पूर्वकं आयुरारोग्याद्यखिलश्रेयःप्रार्थनां कुर्वाणो लेखनादुपरमामि ॥ इति शिवम् ॥

स्वभानु. आषाढ शु. द्वादशीं,
१४-७-१९४३.
कल्याणपुरी

सकलास्तिकवशंवदः सुधीजनविधेयः
**केशवशिवघनपाठी,**
आस्थानविद्वान्, ऋग्वेदाध्यापकः
श्री चामराजेन्द्र वेदमहापाठशाला.

॥ श्रीः ॥

# व्याळिशिक्षाविषयानुक्रमणिका.

## अस्यां शिक्षायां (टिप्पण्यां) उपयुक्तवाक्यानां मूलग्रन्थानां नामानि..

1. ऋक्प्रातिशाख्यं शौनकीयं उव्वटभाष्यं पार्षद्वृत्तिश्च
2. नरसिंह जटालक्षणम्
3. जटापरिभाषा
4. विकृतिवल्ली
5. जटालक्षणम्
6. ऐतरेयारण्यकम्
7. उपलखासूत्रम्
8. विकृतिकौमुदी
9. चरणव्यूहपरिशिष्टम्
10. जयन्तकारिका
11. स्वरशिरोमणिः
12. स्वराङ्कुशाशिक्षा
13 वर्णक्रमशिक्षा

॥ श्रीः ॥

# ग्रन्थान्तरादुद्धृतानां प्रमाणवाक्यानां अकाराद्यनुक्रमणी

श्रीः

# व्यालिशिक्षा मूलवाक्यानां अकाराद्यनुक्रमणी

श्रीः

# लक्ष्यवाक्यपदानुक्रमणी

(अस्मिन्ग्रन्थे उदाहृतानां लक्ष्यवाक्यपदप्रतीकानां अकारादिक्रमेण निर्देष्टुं अशक्यतया तत्तच्छ्लोकोदाहृतानां पदानां वाक्यानां श्लोकानुपूर्वीक्रमेण प्रतीकमात्रं प्रदर्श्यते। तत्रापि सकृदुक्तानि वाक्यानि पुनरनिर्दिश्य पूर्वोदाहृतश्लोकसङ्ख्यामात्रं प्रदर्श्यते) अष्टकाध्याय वर्ग ऋक् संख्या च।

| श्लो. सं. | | | | | |
|---|---|---|---|---|---|
| | स्वाध्यायोध्येतव्यः तै. आ. | 2 | 15 | | |
| | स्वर्गकामः प्रतृणं ऐ. आ. | 3 | 1 | 3 | |
| | उभयकाममुभयं ऐ. आ. | 3 | 1 | 3 | |
| | ऋग्वेद एवाग्नेः छान्दोग्यम् | 4 | 17 | | |
| | अन्नाद्यकामो ऐ. आ. | 3 | 1 | 3 | |
| | अथातो निर्भुज ऐ. आ. | 3 | 1 | 3 | |
| | अथ यथेनं ऐ. आ. | 3 | 1 | 3 | |
| | आचार्या व्यालि शौ. प्रा. | 13 | 31 | | |
| 6 | एन्द्रसानसिं | 1 | 1 | 15 | 1 |
| | एह | 1 | 1 | 1 | 2 |
| | अस्मर्दो ऋचः | 8 | 4 | 22 | 2 |
| 7 | मोषुणः परा | 1 | 3 | 16 | 1 |
| 9 | गोषा इन्द्रो | 6 | 7 | 19 | 5 |
| | नृमणा अधा | 8 | 4 | 25 | 4 |
| | तमसोगा अदु | 1 | 3 | 2 | 5 |
| | कृष्णासो दक्षि | 2 | 2 | 9 | 3 |
| | सुमतिं न जुगु | 6 | 2 | 39 | 2 |
| 9 | युवंनोयेषु | 4 | 4 | 2 | 6 |
| | मित्रवयं च | 4 | 4 | 4 | 6 |
| श्लो. सं | | | | | |
| 9 | अच्छावादातना | 1 | 3 | 17 | 3 |
| | द्युम्नासाहमसि | 1 | 8 | 25 | 3 |
| | चित्कंभनेन | 8 | 6 | 10 | 5 |
| 10 | मृज्यते सानो | 7 | 4 | 11 | 3 |
| 11 | (7) | | | | |
| | आसुष्माणः | 4 | 7 | 19 | 3 |
| | ऊर्ध्व ऊषुणः | 1 | 3 | 10 | 3 |
| | अगादारेगु | 1 | 8 | 1 | 2 |
| | निरुस्वसारं | 8 | 7 | 14 | 3 |
| 12 | निराविध्यत् | 6 | 5 | 30 | 1 |
| | (11) (11) (9) | | | | |
| | परीतोषिंचत | 7 | 5 | 12 | 1 |
| 13-14 | शुनश्चित् | 3 | 8 | 15 | 1 |
| | नरा च शंसं | 7 | 3 | 20 | 2 |
| | नरावाशंसं | 8 | 2 | 6 | 3 |
| 15 | उपोरथेषु | 1 | 3 | 19 | 1 |
| | प्रो अस्मा | 6 | 4 | 40 | 1 |
| | ओषूणो अग्ने | 2 | 2 | 4 | 2 |
| 16 | आवायो भूष | 5 | 5 | 14 | 1 |
| | इन्द्रविन्द्राय | 6 | 8 | 20 | 5 |
| | अध्वर्यो अद्रिभिः | 7 | 1 | 8 | |

| श्लो. सं. | | | | | |
|---|---|---|---|---|---|
| 16 | आध्वर्योद्राव | 5 | 7 | 32 | 1 |
| | दम्पतीव क्रतु-विदा | 2 | 8 | 4 | 2 |
| | उषासानक्ता- | 4 | 2 | 14 | |
| | उपधीव प्रधीव | 2 | 8 | 4 | 4 |
| 17 | इन्द्राग्नी आगतं | 3 | 1 | 11 | 1 |
| | ऊरू तदस्य | 8 | 4 | 19 | 2 |
| | ऊरूपादा | 8 | 4 | 19 | 1 |
| | उभे भद्रे | 1 | 7 | 2 | 1 |
| | उपो अदृश्रन् | 5 | 5 | 12 | 2 |
| 18 | असा उ अर्चिषा | 4 | 1 | 9 | 3 |
| | इयमुते | 6 | 4 | 43 | 2 |
| | गन्तवा उ | 8 | 5 | 3 | 4 |
| | अयमुवां | 3 | 4 | 9 | 2 |
| | इमा उ वां | 3 | 4 | 9 | 1 |
| | उभा उ नूनं | 8 | 6 | 1 | 1 |
| | उदुत्यम् | 1 | 4 | 7 | 1 |
| | इदमुत्यत् | 3 | 8 | 1 | 1 |
| | उदुत्यत् | 5 | 5 | 10 | 4 |
| | यस्मा इरस्य-सीदुनु | 8 | 4 | 1 | 3 |
| | आदूनुते | 6 | 4 | 42 | 5 |
| 19 | 17 18 | | | | |
| | ओमानमश्विना | 1 | 8 | 19 | 2 |
| | ओजीयो धृष्णो | 8 | 7 | 1 | 4 |
| 21 | 18 11 | | | | |
| | अभुत्स्यु प्र | 5 | 8 | 33 | 1 |
| 23 | मेने इव | 2 | 8 | 4 | 2 |
| | दम्पतीव | | .... | | |

| श्लो. सं. | | | | | |
|---|---|---|---|---|---|
| 23 | 16 | | | | |
| | आर्त्नी इव | 8 | 8 | 24 | 3 |
| | अक्षीइव | 2 | 8 | 4 | 5 |
| | ग्रावाणेव | 2 | 8 | 4 | 1 |
| | गृध्रेव | | .... | | |
| | रथीव | 4 | 4 | 27 | 3 |
| | पत्नी इव | 2 | 1 | 1 | 2 |
| | महिषीव | 4 | 1 | 18 | 2 |
| | मण्डूका उदका | 8 | 8 | 24 | 5 |
| | पञ्च प्रधीँरिव | 3 | 6 | 21 | 5 |
| | द्रवत्पाणी | 1 | 1 | 5 | 1 |
| | घृतवती | 5 | 1 | 14 | 1 |
| | वाजिनीवसू | 5 | 8 | 1 | 3 |
| | सुदानू | 1 | 8 | 17 | 4 |
| | मधुदुघे | 5 | 1 | 14 | 1 |
| | काममेत्य | 8 | 2 | 14 | 4 |
| | संरराणे | 5 | 1 | 14 | 6 |
| | पृथुष्टो | 8 | 4 | 2 | 3 |
| | पुरोहितं | 1 | 1 | 1 | 1 |
| | रत्नधातमं | | .... | | |
| | सुरूपकृत्नुम् | 1 | 1 | 7 | 1 |
| | सुमतीनाम् | 1 | 1 | 32 | 4 |
| | विभ्राष्टिम् | 2 | 1 | 12 | 1 |
| | अभिद्युम् | 1 | 8 | 21 | 5 |
| | रघुमन्यवः | 2 | 1 | 1 | 1 |
| | निरुन्धानासः | 2 | 1 | 2 | 2 |
| | गूर्तश्रवाः | 2 | 1 | 2 | 5 |
| | वसुतातिः | 2 | 1 | 3 | 2 |
| | कविक्रतुः | 1 | 1 | 1 | 5 |
| | युवयूः | | 7 | 16 | 3 |

| श्लो. सं. | | | | | |
|---|---|---|---|---|---|
| 30–31 | वाजवन्ता म-रुत्यन्ता. | 6 | 3 | 16 | 3 |
| | ईयुषीणामुपमा | 2 | 1 | 7 | 2 |
| 32 | अधःस्विदासीत् | 8 | 7 | 15 | 5 |
| | मीरिव विन्द-ती ३. | 8 | 8 | 4 | 1 |
| 34 | इदं वि | 6 | 4 | 29 | 3 |
| 36 | जयतं च प्रस्तुतं च | 6 | 3 | 15 | 5 |
| 37 | कई वेद | 6 | 3 | 8 | 2 |
| | आत्मा क्र रिवत् | 2 | 3 | 14 | 4 |
| | रथानां नये | 8 | 3 | 12 | 4 |
| | त्वंह्यं १ ग दैव्या | 7 | 5 | 17 | 3 |
| | 34 | | | | |
| 38 | 22 | | | | |
| 39 | तस्मा इन्द्राय | 1 | 1 | 8 | 5 |
| | 18 | | | | |
| | इमम्मे गङ्गे | 8 | 3 | 6 | 5 |
| 40–43 | कस्विस्को-विद्वांसं. | 2 | 3 | 14 | 4 |
| | शिशीते यूभ्यो ३ वृषा. | 6 | 8 | 5 | 4 |
| | पुनस्ते ३ मा | 8 | 7 | 16 | 1 |
| | मनसा सो ३ यं | 8 | 1 | 13 | 1 |
| | न्यू ३ षु | 1 | 4 | 15 | 1 |
| | उर्विव गातुः | 7 | 4 | 8 | 5 |
| | अतो नो रुद्रा | 4 | 3 | 25 | 6 |
| | अमी ३ दं | 8 | 1 | 6 | 2 |

| श्लो. सं. | | | | | |
|---|---|---|---|---|---|
| 40–43 | वी ३ दं | 4 | 5 | 11 | 6 |
| 45–47 | क १ वोश्वाः | 4 | 3 | 26 | 2 |
| | ष्य १ यैः | 8 | 6 | 21 | 1 |
| | रथ्यो ३ न | 4 | 4 | 34 | 3 |
| | न रथ्या | 6 | 2 | 21 | 2 |
| | न्यू ३ तयः | 4 | 6 | 17 | 3 |
| | 43 | | | | |
| 49 | 37 | | | | |
| 50 | सस्वः १ सः | 8 | 2 | 18 | 3 |
| | क १ स्यावः | 2 | 3 | 25 | 1 |
| | वरूथं तन्वे ३ मम. | 1 | 2 | 12 | 1 |
| | यो ३ ह्यः | 8 | 8 | 2 | 4 |
| | दिवि मे अन्यः | 8 | 6 | 27 | 5 |
| | त्वं समुद्रियाः | 7 | 1 | 29 | 1 |
| | 47 | | | | |
| | अभ्यभि हि | 7 | 5 | 22 | 5 |
| | अघमर्यः | 7 | 8 | 5 | 3 |
| | कृत्वन आसु | 8 | 8 | 2 | 3 |
| | स्तवमान ऊती | 5 | 2 | 30 | 6 |
| | ऊर्ध्वा अभि | 8 | 4 | 25 | 5 |
| | 34 | | | | |
| 50 | इतो नावि | 8 | 7 | 23 | 4 |
| | अमी ३ मं | 6 | 7 | 17 | 4 |
| 51-56 | अग्निमीळे | 1 | 1 | 1 | 1 |
| | अयन्देवाय | 1 | 2 | 1 | 1 |

श्रीः

# व्यालिशिक्षा शुद्धाशुद्धपत्रिका

[सूचना—शुद्धाशुद्धपत्रिकानुसारेण तत्तत्स्थलशोधनानन्तर-मेव वाचकैः ग्रन्थः पठनीय इत्यभ्यर्थना ॥]

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 13 | श्रीन्मतौ | श्रीमन्तौ |
| 2 | 29 | विषयहारिणी | विशयहारिणी |
| 3 | 22 | विह्वारिणी | विहारिणी |
| ,, | 29 | प्रोक्तया | प्रोक्ता |
| 4 | 20 | अप्रामाण न | अप्रामाण्येन |
| 5 | 16 | लक्षक णर्तॄणां | लक्षणकर्तॄणां |
| ,, | 25 | वाचीत्यमिधीयते | वाचीत्यभिधीयते |
| 6 | 24 | देवता सहितं | देवतासहितं |
| 9 | 3 | पुनःरुच्चार्य | पुनरुच्चार्य |
| ,, | 18 | क्रमपटले १०–९१० | क्रमपटले १०–९, १० |
| ,, | 25 | प्रत्यादनाख्य | प्रत्यादानाख्य |
| 10 | 3 | क्रमस्पृष्ठाऽन्त्य | क्रमस्पृष्टान्त्य |
| ,, | 7 | पूर्वोत्तरपदः | पूर्वोत्तरपदः । |
| 12 | 27 | वदेद् बुधः | वदेद्बुधः |
| 14 | 14 | सम्मिक्ष्व | सम्मिमिक्ष्व |
| ,, | 25 | अव्ययः | अव्यय |
| 15 | 8 | अगादारंगुकृष्णा | अगादारंगुकृष्णा |
| ,, | 9 | नः मोनः आसुः | नः मो, नः आसु, |
| 16 | 5 | न च क्रम | (2) न च क्रम |
| ,, | 25 | ब्यपकत्व | व्यापकत्व |
| 17 | 22 | विशिष्टं यत | विशिष्टं यत् |
| 19 | 8 | वृयादथ | ब्रूयादथ |
| 20 | 19 | पदं ब्यवायि | पदव्यवायि |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 21 | 11 | किङ्कमुनो | किङ्किमुनो |
| 22 | 4 | दम्पतीवकतुविदा | दम्पतीव ऋतुविदा |
| ,, | 5 | नक्ताविदुषीवोषसा | नक्ताविदुषीव विदुषीवोषसा |
| ,, | 15 | प्रातिशाख्वे | प्रातिशाख्ये |
| ,, | ,, | प्रगह्याः | प्रगृह्याः |
| 23 | 1 | आगतङ्गः | आगतङ्ग |
| 24 | 22 | द्वयम्ो अका रे | द्वयम् ओकारे |
| ,, | 25 | वकारस्यादो | वकारः स्यादो |
| ,, | 29 | भुग्न संज्ञा | भुग्न संज्ञा |
| 26 | 4 | व। इत्यादीनि | इव। इत्यादीनि। |
| ,, | 5 | वतत्तद् | णेवतत्तद् |
| ,, | 4 | साधारणामि | साधारणानि |
| ,, | 9 | कममात्र | क्रममात्र |
| ,, | 17 | इति वाजिनीवसू | इतिवाजिनीऽवसू |
| ,, | 19 | इति पृथुस्तो | इतिपृथुऽस्तो |
| ,, | 27 | निऽरुन्धानासः | निरुऽन्धानासः |
| ,, | 28 | कविक्रतु । ·रिति | कविक्रतुरिति |
| ,, | 29 | कविऽक्रतुः युवयूरिति | कविऽक्रतुः। युवयूरिति |
| 27 | 17 | धियोनरा | धियानरा |
| ,, | 26 | आसीदित्यासीत् ३।' अमाभूत्। | आसीदित्यासीे३त् '॥ |
| 28 | 6 | इस्यत आह | इत्यत आह |
| ,, | 14 | एवमेव तदा | एकमेव तदा |
| ,, | 20 | जटां कृत्या | जटां कृत्वा |
| 29 | 3 | उक्त्वान्य | उक्तान्य |
| ,, | 20 | पुरुत्रंति | पुरुत्रेति |
| 30 | 17 | पूर्वभागंशान्त्य | पूर्वभागांशान्त्य |
| 31 | 18 | शुद्धर्धर्चे | शुद्धार्धर्चे |
| ,, | 28 | मेव पदपाठे | पदद्वयमेव पदपाठे |
| 32 | 11 | समया समयस्तु | समयाः समयस्तु |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 32 | 24 | क्रमवदब्रूयात् | क्रमवद्ब्रूयात् |
| ,, | 26 | प्रवदम्ति | प्रवदन्ति |
| 33 | 32 | हरिष्टा | हरिष्टा • |
| 34 | 4 | प्रातिशाखाभ्यास | प्रातिशाख्याभ्यास |
| 35 | 3 | जटायाभपि | जटायामपि |
| ,, | 13 | क्रभेण | क्रमेण |
| ,, | 18 | विक्रारा | विकारा |
| ,, | 19 | वाक्या शेषाा | वाक्य शेषा |
| ,, | 21 | मम मब्दमते | मम मन्दमते |
| 36 | 14 | व्यञ्चनौ | व्यञ्जनौ |
| 37 | 9 | उद्दातः | उदात्तः |
| ,, | 20 | स्वरशिशेमणौ | स्वरशिरोमणौ |
| ,, | 22 | तन्ते क्राते | तन्ते काते |
| 38 | 2 | नामाधिधीयते | नामाभिधीयते |
| ,, | 14 | स्घरितं भवेत् | स्वरितं भवेत् |
| ,, | 19 | अ एवमाह | अत एवमाह |
| ,, | ,, | पादस्य वृत्तो | पादस्य वृत्तौ |
| ,, | 23 | विवृत्याप्यंजनेन | विवृत्या व्यञ्जनेन |
| 39 | 3 | यकारान्त क्त | यकारान्तः क्त |
| 40 | 1 | उदादरण | उदाहरण |
| ,, | 13 | स्व क्त | स्वः, क्त |
| ,, | 24 | नीचः नूर्वः | नीचः पूर्वः |
| 41 | 8 | प्रश्लिष्टेन | प्रश्लिष्टत्वेन |
| ,, | 18 | बहृच सरी | बहृचकेसरी |
| ,, | 20 | बहृचकेसरी | बह्वृचकेसरी |
| 42 | 6 | पदादि निहितो | पदादिर्निहितो |
| ,, | 7 | निहिताख्यस्यात् | निहिताख्यः स्यात् |
| ,, | 20 | एकी भावति | एकीभवति |
| ,, | 24 | एकी भवो | एकी भावो |
| ,, | 26 | एकारोकारयोरनुदात्तयोः | एकारोकारयोरुदात्तयो |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 43 | 11 | द्वन्द्वः | द्वन्द्वः |
| ,, | 14 | वेदायो नवीाम् | वेदायोर्वीनाम् |
| ,, | 21 | एकीभावे भवेत् | एकोभावो भवेत् |
| 44 | 16 | नच तयोरिति | नच तयोरिति |
| ,, | 23 | ह्रस्व इकार | ह्रस्व इकार |
| ,, | 26 | कारयोस्थाने | कारयोः स्थाने |
| ,, | 27 | ह्रस्वग्रहणं | ह्रस्वग्रहणं |
| 45 | 2 | (उदातः) | (उदात्तः) |
| ,, | 7-8-12 | क्वचित् | क्वचित् |
| ,, | 8 | यददात्ता | यदोदात्ता |
| ,, | 21 | दीर्गमेक | दीर्घमेक |
| ,, | 24 | सन्धिं च | सधिं च |
| ,, | 27 | शिक्ष्यायाम् | शिक्षायाम् |
| 46 | 3 | अहुरित्यर्थः | आहुरित्यर्थः |
| ,, | 14 | नैषो आसीदित्यादौ, | नैषो अस्तीत्येनमित्यादौ, |
| ,, | 19 | यावत् प्रकर्षत्वञ्च | यावत् प्रकर्षश्च |
| ,, | 20 | सूत्रकृतम् । जन्यया | सूत्रकृतः । अन्यथा |
| ,, | 25 | पूर्धमुच्चः | पूर्वमुच्चः |
| ,, | 29 | अत्र मूछे | अत्र मूले |
| ,, | ,, | " विहीमिद्धः " | " विहीमिद्धः " |
| ,, | 30-31 | अस्तीर्त्ये-र्त्येनम् " | अस्तीत्येनम् " |
| ,, | 31 | स्वरित एव | स्वरित एव |
| 47 | 11 | इस्यारभ्य | इत्यारभ्य |
| ,, | 13 | उ अज्यत्र | उ अन्यत्र |
| ,, | 14 | वर्णा द्वौ | वर्णौ द्वौ |
| ,, | 25 | इत्वेवं | इत्येवं |
| 49 | 7 | द्रस्वदीर्घौ | ह्रस्वदीर्घौ |
| ,, | 13 | सुभ्व इति | सुभ्व १ इति |
| ,, | 14 | आकाय्यस्येत्या | आकाय्य १ स्येत्या |
| 52 | 6 | अत्र भाष्वे | अत्र भाष्ये |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 52 | 7 | विशेषे त्तु | विशेषे तु |
| ,, | 19 | कम्पज्ञत | कम्पज्ञता |
| 55 | 25-26 | प्रातिशाख्यायामुच्यते | प्रातिशाख्ये उच्यते |
| 56 | 13 | ह्रस्व क्षैप्रो | ह्रस्व क्षैप्रो |
| 57 | 4 | सन्धिमुक्ता | सन्धिमुक्त्वा |
| ,, | 17 | ताम्यां सकाशात्पर: | ताभ्यांपर: |
| ,, | 26 | अकार: प्रश्लेषः | अकारप्रश्लेषः |
| 58 | 23 | ननु | नतु |
| 59 | 22 | ३ शनायत् | उशनायत् |
| ,, | 29 | ) पत्यमानः | ) ऐः पत्यमानः |
| 62 | 5 | ईळे पुरोहितं पुरोहितं | ईळे पुरोहितं । पुरोहितं |
| ,, | 11 | यज्ञस्य देवं देवमृत्विजम् | यज्ञस्यदेवम् । देवमृत्विजम् |
| 65 | 9 | देवाय देवाय | देवाय । देवाय |
| 69 | 6 | आ द्विपद | आद्विपद |
| 70 | 3 | मनीर्षिभिः | मनीषिभिः |
| 73 | 4 | पर्येयामः | पश्यामः |
| ,, | 14 | ४-५ | ४ ५ |
| ,, | 26 | नः (2) | वः (2) |
| ,, | 27 | अम्धः (5) मीळर्षे (8) | अन्धः (5) मीळ्हुषे (8) |
| 74 | 19 | अर्धर्चो | अर्धर्चौ |

---

॥ श्रीः ॥

# विक्रमोर्वशीय नान्दीश्लोकानुभवः

(प्रबन्धा) अ. वे. गोपालाचार्यः

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

विक्रमोर्वशीयनाटकनान्दीश्लोकोऽयं अभिधावृत्त्या निगृहीतेन्द्रियग्रामाध्यात्मयोगोपदेशैकमयः अकामहतैकस्वरूपपरमनिःश्रेयससाधनतत्फलसिद्ध्याशासको नाटकप्रयोगद्रष्टृभावुकेभ्यो (कानां) नाटकपठितृणां च । 'नान्दी नन्दीश्वरप्रिया' इति पठितलक्षणसंपत्तिरस्य श्लोकस्य स्थाणुभक्तिप्रशासकस्यास्त्येव । किमिवैतस्मादपि प्रियतरं भवेत् स्थाणुपरमेश्वरसायुज्यसततभाजे तदानन्दनन्दिने भगवते नन्दिने । न तन्मात्रेण अस्मिन् नायकीकृतोर्वशीसायुज्यभृशप्रार्थकविक्रमे अप्सरस्त्रीकामभोगतद्विरहकृतगाढोन्मादादिवर्णनप्रचुरे नाटके स्त्रीकामात्यन्ताभावसहितेन्द्रियनिग्रहपूर्वकं स्थाणुविषयैकाग्रतपश्चर्यादितीव्रनियमवर्णकेतन्नान्दीश्लोकेनोपक्रमस्य औचित्यं संघटेत । विक्रमोर्वश्योर्मिथः कामप्रवृत्त्या दिच्चरित्रे एतादृशस्य विरागिगीतोपक्रमस्य सांगत्यं मृग्यमित्येवभायात् । "अनौचित्यादृते नान्यद्रसभंगस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा" इत्यभियुक्ताः । अस्य नान्दीश्लोकस्यानौचित्यस्य चर्चा अवश्यकर्तव्येति भाति ॥

ब्रह्मज्ञानादुद्विजन्ते त्रिवर्गनिष्ठा जना इति भण्यते अध्यात्मग्रन्थेषु । त्रैगुण्यप्रचुर एव प्रायेण लोकः । "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ " इति व्यासमुनिश्लोकमुदाहृत्योक्तं आनन्दवर्धनाचार्यैः "शान्तस्य तृष्णाक्षयसुखस्यैव यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव" इति । युक्तश्च प्रध्वंस एव तृष्णानाम् । यथोक्तं "वीतरागजन्मादर्शनात्" इति तत्र लोचनम् ।" विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः । निर्ममो

निरहंकारः स शान्तिमधिगच्छति ॥" "स शान्तिमाप्नोति न कामकामी" "अशान्तस्य कुतः सुखम्" "जहि शत्रुं महाबाहो कामरूपं दुरासदम्" इति गायति भगवान् । अस्मिन् नान्दीश्लोके उपनिषदुपदिष्टाध्यात्मयोगेन सर्वान्तरपरमात्मान्वेषणं तत्र लयस्थानवरतयतनं, सर्वबाह्यविषयदर्शनश्रवणचिन्तनाद्यत्यन्तनिवृत्तिः अनन्यभावेन भगवद्विषयैकान्तिकात्यन्तिकभक्तियोगनिष्ठा इत्यादिकं स्पष्टं गीयते । भगवान् स्थाणुरेकोऽद्वितीयः पुरुषो निरन्तरं स्वान्तान्तरन्वेष्टव्य इत्युपदेशो वचनवृत्त्या स्पष्टं प्रतीयते । कामोन्मत्तेन नायकेन ऊर्वशी सुरस्त्रीसाधारणी वनेषु वनेषु, पर्वतेषु पर्वतेषु, दिक्षु विदिक्षु भृशमन्विष्यते । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः,' 'सोन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मानमन्विच्छ गुहां प्रविष्टम्" इति याज्ञवल्क्यादिभिरुपदिश्यते उपनिषत्सु । पतिजायावित्तादिकान्वेषणं प्रतिषिध्य आत्मान्वेषणमनुशशास भगवान् याज्ञवल्क्यो मैत्रेयीं प्रियभार्याम् । निःश्रेयसफलमाशास्यते कविनाऽत्र नाटकोपक्रमे सर्वेषां स्वप्रयोगं भावयतां भावुकानाम् । ईश्वरसालोक्यसायुज्ये अर्थनीये श्रेयस्कामेन पुरुषेण । अयं राजर्षिर्विक्रमो नायकः स्वर्गिजनसाधारणवासवशंभल्यूर्वशीकामुकः तस्याः सायुज्यं कामयमानस्तपस्तेपे । "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति पातंजलयोगसूत्रम् । "तथाऽशुचौ परमबीभत्सकाये 'स्थानाद्बीजादुपष्टंभात् निस्यन्दान्निधनादपि । कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः । इत्यशुचौ शुचिख्यातिर्दृश्यते । नवेव शशांकलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति कस्य केनाभिसंबन्धः । भवति चैवमशुचौ शुचिविषयसंप्रत्ययः इति तत्र वैयासिकं भाष्यम् । अविद्यास्वरूपं वर्णितं तत्रेत्थम् । नाटकनायकः पुरुष एवास्य प्रथमोदाहरणं भवेत् । "अस्याः सर्गविधौ प्रजापतिरभूत् चन्द्रो नु कान्तिप्रदः" इति विक्रमोक्तितुल्या भवत्यत्र व्यासमुन्युक्तिः । कालिदासादपि रसिकतरो 'मुनीनामप्यहं व्यासः' इति भगवन्निर्धारितश्रैष्ठ्यो मुनिः चन्द्रस्य उपादानकारणत्वमुवाच स्ववर्णितकामुकोत्प्रेक्षाभिधाने । निमित्तकारणमात्रं जगौ कालिदासः । तिलोत्तमायाः शरीरसृष्टौ लोकोत्तरसौन्दर्यसारचन्द्रबिम्बादिकं सर्वं वस्तु उपादानतयोपात्तं वेधसेति वर्ण्यते नारदेन आदि-

पर्वणि "तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेत्यतस्तस्या नाम चक्रे पितामहः॥" इति। "सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन। सा निर्मिता विश्वसृजा प्रयत्नात् एकस्थसौन्दर्यदिदृक्षयेव॥" इति अस्य कवेः पर्वतराजकुमारीवर्णनं मुनिभाष्यभाषितवर्णनरीतिमनुरुन्धे। "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" इति भगवान् यमो नचिकेतसं प्रति जगौ। अविद्यायामन्तरे वर्तमानो मोमुह्यमानो गाढोन्मादो विक्रमो नायकः॥

विस्तरशः एतच्छ्लोकस्य अध्यात्मरसान् कतिभिश्चिच्छब्दैः कव्युद्दिष्टकान्तासंमिताध्यात्मोपदेशसूचनानि विज्ञापयिष्यामः। तत्पूर्वं कथञ्चिदस्य विरागिगीतस्य रागिविक्रमचरित्रावलंबिन्यस्मिन्नाटके निवेशनौचित्यप्रदर्शनाय विक्रमोर्वश्योश्चरितं श्रीभागवतादिकथितं अत्र संग्रहीष्यामः। एतयोश्चरितं श्रीभागवतनवमस्कन्धचतुर्दशाध्याये उपाख्यायते महर्षिणा। "अथातः श्रूयतां राजन् वंशः सोमस्य पावनः। यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः॥" इति तदध्यायारम्भः। ऐलः पुरूरवाः। तस्य पुण्यकीर्तित्वं कीर्त्यमानत्वं च कथ्यते भगवता शुकेन, स्वर्धुनीतीरे प्रायोपविष्टाय परीक्षिते मोक्षैकपरायणाय। सोमपुत्रात् बुधात् इलायां जज्ञे पुरूरवाः। "तस्य रूपगुणौदार्यशीलद्रविणविक्रमान्। श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा। तदन्तिकमुपेयाय देवी स्मरशरार्दिता। मित्रावरुणयोः शापात् आपन्ना नरलोकतां। निशम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणं। धृतिं विष्टभ्य ललना उपतस्थौ तदन्तिके। स तां विलोक्य नृपतिः हर्षेणोत्फुल्ललोचनः। उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः। स्वागतं ते वरारोहे आस्यतां करवाणि किम्।" इति तत्र गीतम्। परीक्षित् तद्वंश्यः। शाश्वतीः समाः अप्सरोभीरन्तव्यमित्यैच्छद्विक्रमः। स्वयमागतेयं दिव्यवनिता एनमभिसरन्ती रंभेव नलकूबरम्। "को न सेवेत मनुजो देवीं त्वां स्वयमागताम्" इति तदुक्तिकथको मुनिश्लोकः। "ऊर्वशीरहितं मह्यमास्थानं नातिशोभते" इति ऊर्वशीचिरविरहखिन्नः इन्द्रः ऊर्वश्या विक्रमे न्यस्तं तदपत्यद्वयं गन्धर्वद्वारा अपाहार्षीत्। पुत्राक्रन्दितं निशम्य ऊर्वशी "हतास्म्यहं कुनाथेन नपुंसा वीरमानिना" इति राजानं विगर्ह्य तं विसृज्य अपययौ। ऐलोपि शयने जायामपश्यन् विमना इव। तच्चित्तो विह्वलः शोचन् बभ्रामोन्मत्तवन्महीम्"। तस्य तीव्रदीर्घोन्मादो विस्तरेण

वर्ण्यतेऽत्र तत्प्रलापैः। दण्डकेषु रक्षोनीतसीताविरहखिन्नरामप्रलापा-मनुसरति कविः। रामः स्वेच्छानटः शोकमुन्मादं च अभिनिनाय। "रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपसारितायाम्। भ्राता वने कृपणवत्प्रियया वियुक्तः स्त्रीसंगिनां गतिमिति प्रथयंश्चचार" "प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयति भूतले। प्रपन्नजनतानन्दसन्दोहं प्रथितं प्रभो" इत्यादिकं भागवतगीतमिह स्मर्तव्यम्। अनन्तरं पठितं श्री-भागवतनवमचतुर्दशे "स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः। पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः। अये जाये तिष्ठ तिष्ठ घोरे न त्यक्तु मर्हसि। मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै। सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया। खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम्" इति। एवं मरणे निश्चितबुद्धिं पुरूरवसमुवाचोर्वशी" मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाद्युर्वृका इमे। . . . संवत्सरान्ते हि भवानेकरात्रं मये-श्वरः। वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः" "अन्तर्वत्नी-मुपालक्ष्य देवीं स प्रययौ पुरीम्। पुनस्तत्रागतोऽब्दान्ते उर्वशीं वीर-मातरम्। उपलभ्य मुदा युक्तः समुवास तया निशाम्॥"। वीराः पुत्राः। अनन्तरं ऊर्वशीवचनात् गन्धर्वान् स्तुत्वा तद्दत्तामग्निस्थालीं प्रतिगृह्य तां वने न्यस्य गृहं गत्वा तत्र तामुर्वशीं निशि निशि दध्यौ। तां नित्यं ध्यायत-स्तस्य "त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत"। 'तस्य मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत्' इति तत्र श्रीधरस्वामी। तत् स्थालीस्थाने शम्या गर्भे जातमश्वत्थं विलक्ष्य अस्मिन्नसावग्निरस्तीति-निश्चित्य "तेन द्वे अरणी कृत्वा ऊर्वशीलोककाम्यया। उर्वशीं मन्त्रतो ध्यायन् अधरारणिमुत्तरां। आत्मानमुभयोर्मध्ये यत् तत् प्रजननं प्रभुः। तस्य निर्मथनाज्जातो जातवेदा विभावसुः। त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत्। तेनायजत यज्ञेशं भगवन्तमधोक्षजम्। उर्वशी-लोकमन्विच्छन् सर्वदेवमयं हरिम्। . . . . . . . . . . अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान्" इत्युपाख्यातम्। तेन अश्वत्थेन द्वे अरणी कृत्वा अग्निं ममन्थ। अधरारणिमुर्वशीं ध्यायन् उत्तरारणिमा-त्मानं ध्यायन् मध्ये यत्तु काष्ठं तत् प्रजननं पुत्रं ध्यायन् ममन्थ' इति श्रीधरस्वामी। "शमीगर्भादग्निं (मन्थति) ममन्थेति" 'उर्वश्यस्यायुरसि' पुरूरवा "अपोनर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः" इति श्रुतिमन्त्रा उदाहृताः व्याख्यातृभिः ध्यानमन्त्रत्वेन। "इति त्वा देवा इम आहुरैल यथेमे-

तद्भवसि मृत्युबन्धुः। प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे" इति अग्निस्थालीं ऊर्वशीं मन्यमानो वने चरन् नेयमुर्वशी किन्तु अग्निस्थालीति ज्ञातवान्" इति श्रीविजयध्वजस्वामी। मथनध्यानफलत्वेन जनितेन अग्निना पुत्रेण हेतुना गन्धर्वलोकं प्राप। अनन्तरं पञ्चदशाध्यायारंभे "ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप। आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः" इत्येतावदुपाख्यातं नवमे एतद्विषयश्रुतिसूक्तस्मारणपूर्वकम्। शैशवात्प्रभृति स्वात्यन्तसुहृदे उद्धवाय एकादशस्कन्धे अध्यात्मानुशासनमनुशासानो भगवान् षड्विंशतितमे अध्याये, "ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः। उर्वशीविरहान्मुह्यन् निर्विण्णः शोकसंयमे। त्यक्त्वात्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः। विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः। कामानतृप्तोऽनुजुषन् क्षुल्लकान् वर्षयामिनीः। न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः।" इति कथयित्वा ऐलेन गीतान् निर्वेदश्लोकान् अपठत्, "अहो मे मोहविस्तारः कामकश्मलचेतसः। देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः। नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया। मुषितो वर्षपूगानां बताहानि गतान्युत। अहो मे आत्मसंमोहो येनात्मा योषितां कृतः। क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः। सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम्। यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन्। कुतस्तस्यानुभावःस्यात् तेज ईशत्वमेव वा। योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः।...... स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनं। योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः। सेवतो वर्षपूगान्मे उर्वश्या अधरासवं। न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा। पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः। आत्मारामेश्वरमृते भगवन्तमधोक्षजम्। बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः। मनोगतो महामोहो नापयात्यजितात्मनः।......... क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः।... . . त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ। विण्मूत्रपूये रमतां कृमीणां कियदन्तरम्।" इति। इत्थं कामभोगान्निर्विण्णस्य पुरूरवसो वैराग्यगीतं गीत्वा भगवान् स्वयगायत "एवं प्रगायन् नृपदेवदेवः स उर्वशीलोकमथो विहाय। आत्मानमात्मन्यवगम्य मां वै उपारमत् ज्ञानविधूतमोहः।" इति। तीव्राध्यात्मयोगेन स्वात्मनः परमात्मनि प्रविलापनेच्छामुत्पादयेत् इतिहासाभिज्ञानां अभिज्ञसभ्यानां नाटकप्रेक्षकाणां अध्ये-

तृणां प्रचुरतद्भावापत्तिं च विदध्यात् सविमर्शमनुभूयमानो नान्दीश्लोकः। वैराग्यभगवद्योगोपपादके एकादशस्कन्धे 'पुरूरवसो वैराग्यगीतं तन्मोक्षप्राप्तिश्च उपादायिषातां भगवता लोकस्य वैराग्यजननाय। "वैतसेनस्ततोऽप्येवं उर्वश्या लोकनिःस्पृहः। मुक्तसङ्गो महीमेतामात्मारामश्चचार ह" "इति श्लोकेन तदध्याय उपसमहारि भगवता। वीतसेनः सुद्युम्न ऐलपिता। चिराय उर्वशीसमो भूत्वा तद्विरहप्राप्तगाढोन्मादः तामेव एकप्राप्यत्वेनान्विष्य महीं चचार। इदानीं उर्वशीभोगनिःस्पृहः त्यक्तसर्वविषयसंगः भगवदेकरतिः निरपेक्षो गां पर्यटत् विरागं गायन्। पुरूरवस(सो)गीतवर्णनेन अध्यात्मयोगमुपसंहृत्य अनन्तर-(राध्याये) सर्गे कर्मयोगोपदेशं प्रारभत भगवान् षड्विंशतत्त्वमीश्वरः। "योगिनो योगविभ्रंशः संगतः संभवेदिति। सर्वथा तन्निवृत्त्यर्थं ऐलगीतं वितन्यते" इति श्रीधरीयस्तदध्यायसारसंग्रहश्लोकः। "उर्वशीविरहात् प्रथमं मुह्यन् पश्चात् कुरुक्षेत्रे तां संगम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे(न) शोकापगमे सति ततो निर्विण्णः सन् इमां गाथामगायत् इति नवमस्कन्धानुसारेण द्रष्टव्यम्" इति श्रीधरीये। "बोधितस्यापि देव्या मे सूक्तवाकेन दुर्मतेः" इत्यनूदितः सूक्तवाकः 'पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उ क्षन्। न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता' इति श्रीधरीया ह्युदाहृतः। 'हे पुरूरवः त्वं मा मृथाः—माम्रियस्व, मा प्रपप्तः—मद्विरहेण मा प्रतप्तो भव, अशिवाः—अमंगलाः (सालाः) वृकासः इन्द्रियलक्षणाः वृकाः त्वा-त्वां मा उ क्षन्-मा भक्षयेयुः, इन्द्रियवशो मा भवेत्यर्थः। स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि(न) सन्ति तासु विश्वासो न कर्तव्य इत्यर्थः। यत एता एतासां स्त्रीणां हृदयानि सालावृकाणां शुनामिव नवनवाकांक्षीणि इति मन्त्रार्थः" इति तन्मन्त्रस्य राधारमणगोस्वामिव्याख्या। "कान्तासंमिततयोपदेशयुजे" इति कविचिकीर्षितोपदेशस्य कान्ताया उपदेशस्य(च) तुल्यत्वमुच्यते। अत्र यद्विषयोऽस्य संमोहः सा कान्ता ऊर्वश्येवेत्थं वैराग्यं सुदृढं सुस्पष्टमुपदिदेश। परमेश्वरप्रसादं विनादेवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तते" इति श्रीधरः। 'देव्युपदिष्टादपीति इत्यपि भावः। देवैर्देवीभिश्चेत्येकशेषाश्रयः। देव्या उर्वश्या सूक्तवाकेन सूनृतवाक्येन 'न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता' इति श्रुत्युक्तविधया प्रतिबोधितस्यापि दुर्मतेः

कामासक्तमनसः" इति श्रीवीरराघवस्वामिव्याख्या। प्रियतमकान्तोर्वश्युपदेशः कृतः श्रुतिर्देव्युत्सृष्टां वाचमुदाहृत्य। एतन्मिथुनविषयिणी सा श्रुतिः। तथापि न वैराग्यभानुरुदियाय। काममोहान्धकार एव बुद्धिं भृशमावृणोत्। "हृदाकाशे चिदादित्यः सदा भाति निरन्तरम्। नास्तमेति न चोदेति कथं सन्ध्यामुपास्महे" इति भगवद्भक्तियोगार्णवव्यग्राः असंप्रज्ञातसमाधिनिष्ठाः उद्यन्तमस्तं यन्तमादित्यमबुध्यमानाः सन्ध्यां नोपासीरन्। उर्वशीभोगरसार्णवमग्नो विक्रमः भगवतः सवितुः उदयास्तमयावविदन् सन्ध्योपासनविहीनः आस। सीताविरहोन्मादो रामभद्रस्य 'नारीणामुत्तमा वधू"रिति ऋषिप्रशस्ताया लोकोत्तरपतिव्रतायाः सुरसुतोपमाया जगदीश्वर्या विरहप्रयोजितः। संयोगे वा वियोगे वा भगवान् रामो न कदाचिदपि संन्ध्यां जहाविति ऋषिः पदेपदे वक्ति। सूर्यरश्मिविधुरायां गिरिगुहायां भ्रात्रा सह वसन् रामः "निलीयमानैर्विहगैर्निमीलद्भिश्च पंकजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः" इति ऋषिवर्णितरीत्या सन्ध्याकालं बुद्ध्वा सन्ध्यां नियमेनोपास्त। उर्वशीभोगसुचिरप्रसक्तस्य कामुकाग्रेसरस्य चक्रवर्तिनः नरदेवशिखामणेः यदि तदत्यन्तासारतानिश्चयेन तीव्रवैराग्यं समजनि, यदि तेनैव इन्द्रियाणि सर्वाणि सुदृढं संयम्य एतन्नान्दीश्लोकवर्णितस्थाणुवदचला स्थिरभक्तियोगनिष्ठा समपद्यत, तत्कामभोगचरित्रवर्णनमपि तस्य तत्तीव्रकामात् दृढं निर्वेद्य अन्ते विरक्ताग्रेसरीभूय भगवद्योगिसार्वभौमीभवनं श्रुतिपुराणादिप्रसिद्धतच्चरितज्ञानवतामभिज्ञानं ध्रुवं वैराग्यस्य निपुणोपदेशकं भवेत्। अयं कामकामः उर्वश्यारामः तां विहाय परं वैराग्यं लब्ध्वा वशी संयमधनः आत्मैकरतिर्बभूव। ततस्तस्य पूर्वकामुकावस्थापरिज्ञानमपि तदनुभूतलोकोत्तरकामस्यात्यन्तासारतां करतलामलकीकुर्यादिति, अयमेव कामुकनायको विरक्ताग्रेसरो योगिसार्वभौमोऽभवदिति एतन्नान्दीश्लोकप्रणयनेन निपुणमुपदिदिक्षति निपुणः कविः। उर्वशीमुखेन पुरूरवसो मुखेन च कामभोगस्य तुच्छता सम्यमुपपादीति श्रुतिभागवताद्यभिज्ञपारिषदानां सुविदितमेव स्यात्। यद्यत् कविबुद्धिस्थं, अभिरूपश्रोतृबुद्धिस्थं च श्रुतिप्रसिद्धं भागवतप्रसिद्धं च तत् प्रस्तुतमेव व्यंग्यार्थव्यक्तौ महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन

स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः। स्वयं च्योदासोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकं अतिविमलज्ञानावलोकदायिना लोकनाथेन "यथायथा विपर्येति लोकतन्त्रमसारवत्। तथातथा विरागोऽत्र जायते नात्र संशयः" इत्यादि बहुशः कथयता। ततश्च शान्तो रसो रसान्तरैर्मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते। सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्यां दर्शितं, दर्शितं तु व्यंग्यत्वेन" इति ध्वन्यालोकचतुर्थोद्योतोक्तमनधेयम्। एतत्कामिकामचरित्रस्य (त्रं) दृश्यतया प्रदर्श्यते अत्युत्तमसुरस्त्रीकामभोगस्य (गं) परिणामे विषमयता। वस्तुतोऽसारताभ्यूहेन विक्रमोर्वशीयमिति नाटकसंज्ञामात्रेण स्मर्यमाणोर्वशीविक्रमवैराग्योपदेशेन उर्वशीरतिं तुच्छत्वेनोज्झित्वा ब्रह्मरतिमज्जन एव ऐकान्तिकवस्तुभूतं सुखं पश्यता नायकनान्ते अवलम्बितैतन्नान्दीश्लोकवर्णिततीव्रवैराग्यपूर्वकब्रह्मैकरतिमज्जनवृत्तान्तस्मारणेन च निपुणमस्य आत्मतत्त्वोपदेशस्यानुभवारूढतयाऽनुभावनं स्वाभिप्रेतमिति कविरनेन श्लोकेन व्यनक्तीव। कामायैतन्मैथुनचरित्रवर्णके अस्मिन्नाटकेऽस्य वैराग्याध्यात्मयोगैकतानश्लोकस्य निवेशनस्यान्यथानुपपत्तिरूपार्थापत्तिप्रमाणेनापि अस्य वैराग्योपदेशस्य एतन्नाटकचरित्रादेव गम्यमानत्वस्य कविबुद्धिस्थत्वं सुगममिव॥

अथ एतच्छ्लोकानुभवेऽवतरामः। 'यं, यस्मिन्, यः, सः वो निःश्रेयसायास्तु। निःश्रेयसं उत्तमं ब्रह्मानन्दसततप्राप्तिरूपमोक्षश्रेयः। पठितृश्रोतृद्रष्टॄणां परं निःश्रेयसमाशास्ते। नेदमनभिसन्धिर्भवेत्। वेदान्तेषु' इति सर्ववेदान्तसंग्राहकपदेन नाटकमारभमाणः 'वः' इति संबोधितसर्वसभ्येभ्यः 'निःश्रेयसाय' इति तादर्थ्यचतुर्थ्या परममोक्षानन्दानुभावनप्रयोजनवितरणमाशासानः कविसार्वभौमो नानौचित्यप्रयुक्तरसभङ्गदोषे आत्मानं पातयेत्। "रतिपुत्रफला दाराः" इति भगवान् नारदः सभापर्वारंभे युधिष्ठिरं प्रति वक्ति। वंशकरः सुतः आयुर्जज्ञ उर्वश्यां पुरूरवसः, यद्यपि सः अनेकसाधारणसुरयुवतिसंभवः, तस्यां रतिः काममयी। 'वेदान्तेषु' इति सर्वे वेदान्ताः अभिप्रेयन्ते असंकोचन्यायेन। "वेदैश्च सर्वैरहमेव वेद्यः' इति गीतामध्ये विश्वरूपभगवद्वानम्। वेदानामन्तभागाः वेदान्ताः चरमपुरुषार्थप्रतिपादकाः। अन्तो निर्णयः

पर्यवसानम्। कर्मदेवताभागानां मोक्षपर्यवसायित्वमेव त्रिःसङ्गानाम्। शारीरकशास्त्राध्यायचतुष्टयसंग्राहकाः इमे श्लोकपादाः। अत्र प्रथमपादे सर्वेषां वेदान्तानां एकस्मिन्नद्वितीये ब्रह्मणि समन्वयः कथ्यते। स च प्रथमसमन्वयलक्षणविषयः। सर्वेषां वेदान्तानामेकस्मिन्ब्रह्मणि गतिसामान्यं निरूपितं तत्र। 'वेदान्तेषु' इति 'ब्रह्मणि वेदान्तानामेव प्रामाण्यं, नान्येषां प्रत्यक्षादीनां' इत्यारंभ एव व्यज्यते। अस्मिन्विषये वेदान्ताः प्रमाणमेव, वेदान्ता एव प्रमाणं इत्ययोगान्ययोगव्यवच्छेदयोरर्थाल्लाभः। असति बाधके सर्वं वाक्यं सावधारणम्। 'यं एकं पुरुषं आहुः के आहुः? अशरीरिणः अपुरुषाः अनादयो नित्याः शब्दाः आहुः। तेषां व्यक्तिविशेषपुरुषत्वाभावात् (अपौरुषेयत्वात्) न तेषां(षु) पक्षपाताभिनिवेशादीनां पुरुषसंभावनीयवक्तृदोषाणां संभवः। यद्यपि ते शब्दाः न पुरुषाः चेतनाः, प्रत्युत केवलशब्दस्वरूपाः, तेषां अतीन्द्रियवस्तुप्रकाशकत्वरूपं ज्योतिष्ट्वमस्ति। तच्च तेषामसाधारणम्। शब्दत्वेऽपि प्रत्यक्षत्वेन व्यवह्रियन्ते ते शारीरकशास्त्रे। त एव चक्षुरस्माकं तत्त्वदर्शने। 'आहुः' इति अनिर्दिष्टकर्तृविशेषक्रियामात्रपठनं ध्रुवं रस्यम्। अकर्तृकाः शब्दा आहुः। पुरुषत्वाभावेऽपि शब्दस्वरूपत्वात् वचनसामर्थ्यमस्ति। वेदवेदान्तमन्त्राः ऋषिसंज्ञया व्यवह्रियन्ते। 'ऋषयः आहुः। कति ते? असंख्येयाः अनन्तास्ते। "अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं हताशेषावद्यं हयवदनमीडीमहि महः" इति हयशिरोधरस्य देवस्य स्तुतौ श्रीवेंकटनाथः। यद्यपि ते वेदा अनन्ताः, असंख्येयाः, तेषामन्ताः वेदान्ताः अन्तशब्दो निश्चयार्थकश्च। बहूनि शब्दब्रह्माणि एकं परं ब्रह्म आहुः। बोधनसामर्थ्यं वेदयितृत्वसामर्थ्यमस्तीत्यत उच्यते 'आहुः' इति। परमं तत्त्वं ध्यानयोगेन साक्षात्कृतवन्तः सर्वे ऋषयः आहुः" परं ब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यं आदिदेवमजं विभुम्। आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे। सर्वमेतदृतं मन्ये यन्मां वदसि केशव" इति गीतादशमे अर्जुनः। "एकैव मूर्तिर्बिभिदे त्रिधासौ" इत्यस्य कवेस्त्रिमूर्त्यैक्यं निश्चितं मतम्। तन्मतेनैव तद्धृदयं वर्णनीयम्। "यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदम्" इति काश्यपदाक्षायणीद्वन्द्वप्रभावकथने दुष्यन्तः सप्तमेऽङ्के उपेन्द्रं 'आत्मभुवः परः पुरुष' इति निर्दिशति। तत्र निर्दिष्टः 'आत्मभुवः परः पुरुषः' अत्रोक्तपुरुषान्न परो भवेत्। न द्वौ परौ पुरुषौ संभवतः। "यदक्षरं वेदविदो वदन्ति

विशन्ति यद्यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये" इति गीताष्टमे। न केवलं वेदवेंदान्ता वदन्ति तदर्थज्ञाः तदभिप्रेततत्त्वसाक्षात्कारवन्तः सर्वे आहुः। गीताश्लोकप्रथमपादोक्तम स्मिन् पादेऽनूद्यते। तत्र द्वितीयपादोक्तः ब्रह्मणि अविभागेन प्रवेशः अत्र तुरीयपादे परमप्राप्यत्वेनोच्यते। एकं पुरुषं एकशब्दः संख्यावाची मुख्य वाची च। अयमेकोऽद्वितीयः पुरुषः। "परमार्थस्त्वमेवैको नान्योस्ति जगतीपते" इति अनन्याधीनतया स्वतः सन् एक एव। अन्यत्सर्वं तद-धीनसत्ताकं स्वतस्सत्तारहितं। तद्व्यतिरेकेण स्थित्यनर्हम्। अनन्यत्वा-पृथक्त्वाव्यतिरेकावैशेष्याविभागशब्दाः गीतासूत्रादिप्रयुक्ताः जगद्ब्रह्म-णोस्सम्बन्धप्रतिपादकाः। गीतापञ्चदशे "सर्वस्य चाहं हृदि सन्निविष्टः मत्तः स्मृतिर्ज्ञानमपोहनं च। वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। (क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते) उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति गीतमेवानु-सरति कविरस्मिन्प्रथमे पादे। पुरुषः पुरिशयः। "पूः प्राणिनः सर्वगुहा-शयस्य" इत्यापस्तम्बधर्मसूत्रपठिता आत्मलाभीया श्रुतिः। पुरि-सर्वप्राणि-हृदयगुहासु यः शेते, स विश्वान्तर्यामी एकः पुरुषः पुरुषोत्तमः। 'पूर्वमेवासमितिपुरुषः'। रोदसी-द्यावापृथिव्यौ विश्वव्याप्तं ऐश्वरं कृष्ण-रूपं पश्यन्नर्जुनः, "सनातनस्त्वं पुरुषो मतो मे," 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः "इत्युवाच। तच्चात्र कविबुद्धिस्थम् "श्रीवत्सावक्षाः पुरुषश्च साक्षात्" इति विष्णुं वर्णयामासायं कविः कुमारसंभवे पार्वतीविवाहोत्सववर्णनप्रकरणे। तदनन्तरश्लोके "एकैव मूर्तिर्बिभिदे त्रिधासौ", इति पठितम्। "हरिर्यथैकः पुरुषोत्तमः स्मृतः महेश्वरस्त्र्यम्बक एव नापरः" इति रघुवंशे। प्रथमपादोक्तः एकः पुरुषः पुरुषोत्तमो हरिमूर्तिर्भवेत्। द्वितीयपादोक्तो निरुपाधि-केश्वरो हरो भवेत्। चतुर्थपादोक्तः स्थाणुर्हरः। सर्वेषामेषां शब्दानां एकपरब्रह्मगामित्वमभिप्रेत्यत्र कविः। "अव्यक्तात्पुरुषः परः। पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः" इति कठवल्लीप्रोक्तः परम-पुरुषः विष्णोः परमं पदं अध्वनः पारम्। पद्यते इति पदं स्वरूपम्। परो मा अस्मादिति व्युत्पत्त्या सर्वस्मात्परः पुरुषस्सूच्यते परमपदेन। "पुरुषः स

परः पार्थ भक्त्या लभ्यस्त्वनन्यया " इति भगवद्वानमपि अस्मिन् श्लोके कविबुद्धौ परिवर्तते। परः पुरुषः—एकपुरुषः। अनन्यविषयः। भक्तियोग-सुलभपदे अत्र प्रयुज्येते। "तमेव चाद्यं पुरुषं प्रपद्ये(त्)यतः प्रवृत्तिः प्रसृता पुराणी" इति गीता। आद्यः पुरुषः एकपुरुषः। तद्योसावसौ पुरुष-स्सोहमस्मि" इतीशावास्यम्। असौ असौ पुरुष' इति वीप्सा अवधेया। तावती प्रीतिरूपास्यपुरुषे। उपासितुरपि स्वैकीकरणात्तस्य एकपुरुषत्वं दृढीक्रियत इव। "एकर्षे' इति तस्य एकद्रष्टृत्वं तन्मन्त्रे कीर्त्यते उपासक-रूपद्रष्टुस्तदेकीभवनसंभवेन। तस्मिन् सर्वप्राणभूते सर्वान्तर्यामिणि अवि-भागेन प्रवेशे तस्यान्तर्यामिणः एकद्रष्टृत्वं शिष्यते। चिदचितामन्तर्याम्या-त्मत्वं विस्तरेण प्रतिपाद्य अन्तर्यामिब्रह्मणि सर्वनियन्तरि सर्वात्मनां दर्शन-श्रवणमननादिसर्वशक्तिमूलभूते सर्वान्तर्यामिणि सर्वेषामात्मभूते तस्मि-न्नन्तःप्रवेशे तदविभागापत्त्या 'नान्योऽतो द्रष्टा' इत्यादिकं निगद्यते। केनोपनिषदा इदं विव्रियत इव "येन वागभ्युद्यते" येनाहुर्मनोमतं,' येन चक्षूंषि पश्यति येन श्रोत्रमिदं श्रुतं येन प्राणः प्रणीयते तदेव ब्रह्म" इति "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इति कठवल्ली। "यः पुनरेतं त्रिमात्रेणैव ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इति प्रश्नोपनिषदि पञ्चमशैब्यप्रश्नोत्तरम्॥

अस्मिन् नान्दीश्लोके योग उपदिश्यते। "कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः। स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ। न सन्त्येव वेदभागा यत्र परमेश्वरो न गीयते" इति कुसुमाञ्जलिः। पातञ्जलसूत्राणि स्मर्यन्ते स्मार्यन्ते चात्र कविना। ईश्वरप्रणिधानाद्वा,' 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थभावनं,' 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष-विशेषः ईश्वरः,' स पूर्वेषामपि गुरुः का(लेना)लानवच्छेदात्" इति योगसूत्रपदैस्तदर्थैश्च घटितोऽयं श्लोक इति स्फुटम्। "तथा सतः पुरुषात्संभवतीह विश्वम्'' 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्," 'बह्वीः प्रजाः पुरुषात्संप्रसूताः,' 'यदापश्यः पश्यते रुक्म-वर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'उपासते पुरुषं ये ह्यकामाः, 'यथा-नद्यःस्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तदा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति मुण्डकम् "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव

स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पुरुषेण सर्वम्' इति नारायणोपनिषदि। "विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वा अमृताभवन्ति," 'वेदाहमेतं पुरुषं महान्तम्,' 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्,' 'तमाहुरेकं पुरुषं महान्तं" इति श्वेताश्वतरे। इत्थं विश्वव्याप्तैकपुरुषस्य सर्ववेदान्तप्रसिद्धिः। तत्साक्षात्करणतदन्तःप्रवेशादिभिरेवामृतत्वरूपनिःश्रेयसप्राप्तिः संभावयितुं शक्या। इत्थं प्रथम पादेन समन्वयाध्यायसंग्रहः। एकादशस्कन्धे विक्रमगीतविरागश्लोकेषु विक्रमः, 'चक्रवर्ती, 'ईश्वरः, ईश्वरतां प्राप्तः" इत्यात्मानं निर्दिशति। तस्यैश्वर्यं 'क्षोणीकोणशतांशपालनविषयमत्यल्पमापेक्षिकम्। तदपि सर्वेश्वरानुग्रहैकायत्तम्। न स्वायत्तम्। यस्य असंकुचितमनवधिकं निरुपाधिकं स्वाभाविकं अनन्याधीनं स्वायत्तमखण्डैश्वर्यं स एव निर्विशेषितकेवलेश्वरशब्दस्य एकभाजनं, मुख्यभाजनं भवेत्। आत्मनैव स्वत एवेश्वरो भगवानेक एव। स आत्मारामः आत्मेश्वरः। "पतिं विश्वस्यात्मेश्वरम्। विश्वस्य पतिः शेषी ईश्वरः। तस्य क ईश्वरः? स्वयमेव स्वस्येश्वरः। अनन्येश्वरः आत्मेश्वर इत्युच्यते। "नान्यो हेतुर्विद्यते ईशनाय", 'परास्य शक्तिर्विविव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति तस्य विश्वैश्वर्यं स्वायत्तं स्वाभाविकं अनन्याधीनम्। एको हि रुद्रो न द्वितीयाय तस्थुः य इमान् लोकानीशते (त) ईशनीभिः" 'तमीश्वराणां परमं महेश्वरम्" 'अत्याश्रमिभ्यः परमं पवित्रम्" इत्यादिकं श्वेताश्वतरगीतमवधेयम्। "ज्ञाज्ञौ द्वावजावीशानीशौ" इति प्रसिद्धः ईशानीशविभागः। "क्षरात्मा(त्म)नावीशते देव एकः" इति सर्वान्तर्यम्येकः परमपुरुषः। इतरे सर्वे तन्नियाम्याः। ईश्वरशब्दस्य मुख्यभाजनं सर्वेश्वर एक एव। यथार्थाक्षरत्वं, मुख्यत्वं, अगौणत्वं, अनौपचारिकत्वं, अन्वर्थत्वं, , अवितथत्वम्। आपेक्षिकैश्वर्यमहिमादिभाजः इतरे सर्वे महिमवन्तः ईश्वरतेजोंशसंभवाः। अस्मिन्नीश्वरशब्दो मुख्यवृत्तः। इतरेषु ईश्वरशब्दप्रयोगस्तद्गुणलेशयोगादौपचारिकः। ईशितव्यविषयनिर्देशं विना कतिपयविशेषनिर्देशपरिच्छित्तिप्रापणं विना प्रयुज्यमानः केवलः ईश्वरशब्दः सर्वेश्वरं भगवन्तमेवाभिदध्यात्। 'अनन्यविषयः, इत्यस्यार्थद्वयमिव। ईश्वरशब्दः परमेश्वरैकाभिधानयोग्यः इत्येकार्थः। यत्र स्वेशितव्यविषयो निर्दिश्यते तत्र निर्दिष्टेशितव्यमात्रविषयः स शब्दः। विशेषनिर्देशरूपसंकोचे(च) निमित्तसत्त्वात्। यत्र

ईशितव्यपरिमितवस्तुविशेषनिर्देशं विना अविशेषितः केवलः ईश्वरशब्दः प्रयुज्यते, तत्र निरंकुशसर्वेशितारमीश्वरमेव गमयेदीश्वरशब्दः। ईशानो भूतभव्यस्य" इति निरंकुशसर्वेशानत्वशब्दात् हृदयगुहान्तर्वर्त्यङ्गुष्ठमात्रपुरुषस्य परमात्मत्वं निर्धारितं 'शब्दादेव प्रमितः' इति प्रमिताधिकरणे प्रथमाध्याये। विश्वान्तर्यामी विश्वव्यापी विश्वात्मा सर्वभूतगुहाशयः पुरिशयः सर्वान्तरः प्रियैकमयः सर्वस्मात्प्रेयान् पुरुषः योगिध्येयः उक्तः। अत्रापि "अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते" इत्यादिकठमन्त्रोक्तहृदयगुहान्तर्वर्ती अध्यात्मयोगेन आवृत्तचक्षुषा ध्येयो गुहाप्रविष्ट उच्यते।

तृतीयपादे 'अन्तर्यो मृग्यते' इति सर्वान्तरो हार्दान्तर्यामी स्पष्टं ध्येयत्वेनोच्यते। तुरीयपादोक्तः स्थिरभक्तियोगसुलभः स्थाणुरपि स एव। श्वेताश्वतरवर्णितयोगः प्रे(रयि)रित्रन्तर्यामिविषयः। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" इति श्वेताश्वतरमन्त्रेणेदं स्पष्टीकृतम्। कठवल्लीवर्णितयोगस्तद्विषय एव। "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इति श्वेताश्वतरान्तिमाध्यायपठितमन्त्रोऽवधेयः। 'स्थेशभासपिसकसो वरच्' इति सूत्रेण ताच्छील्यार्थे वरच्प्रत्ययः ईश ऐश्वर्ये' इति ईशधातोः परतो विहितः। ऐश्वर्यमस्य स्वभावः शीलम्। अस्य तत् स्वाभाविकं स्वायत्तम्। जीवभोगापवर्गार्थं स्वयं स्वभावतः प्रवर्तते प्रकृतिरिति सांख्याः। प्रकृतिपुरुषविवेकाभ्यासेन स्वतः कैवल्यं सिद्ध्यतीति योगिनः निरीश्वरवादिनः सन्ति। "बहवः पुरुषा राजन् सांख्ययोगविचारिणां। नैत(दि) इच्छन्ति पुरुषं एकं कुरुकुलोद्वह। समासेन तु तद्व्यासः पुरुषैकात्म्यमुक्तवान्" इति महाभारते। "वेदान्तेषु यं आहुः (यमाहुरे)एकपुरुषं "इत्युपक्रममाणः कविः सांख्ययोगादिव्यतिरेकं वेदान्तस्य प्रदर्शयद्व्यासवचनं ध्रुवं स्मरति, स्मारयति चास्मान्। व्यासः समासेन एकपुरुषेश्वरेण विश्वजीवैकात्म्यमुक्तवान्" इत्यार्षश्लोकव्यञ्जितरसोऽनुभाव्यः। असंख्येयान् जीवपुरुषान् अभ्युपगच्छन्तः सांख्याः योगिनश्च एकं सर्वजीवपुरुषगुहाशयं सर्वान्तर्यामिणं सर्वजीवानां स्वस्मिन् अविभागलयद्वारा एकीभवनानुभावकं मुख्यं पुरुषं नाभ्युपगच्छन्ति इत्युक्तम्। 'एकपुरुष'मिति प्रथमपादपठितं

तद्वचनस्मारणेन सांख्यानां योगिनां च योगप्रक्रियाव्यतिरेकं वेदान्ताध्यात्मयोगस्य ध्वनयति। ईश्वरो न जगत्कारणं भवेदिति बहुधा आक्षिप्य समाधीयते ईश्वरकारणत्वं च दृढीक्रियते द्वितीयाध्याये। तद्विषयस्सूच्यतेऽत्र द्वितीयपादेन। ईशधात्वर्थः वरच्प्रत्ययार्थः इत्युभयं ईश्वरशब्दवाच्यमस्मिन्नेव यथार्थमिति कविहृदयम्। "अन्तर्यश्च मृग्यते" तस्मात् पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्' 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यादिकमत्र (वि)भाव्यम्। "संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेन्द्रियग्रामं विनियम्य समन्ततः। शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। यतो यतो निश्चरति मनश्चञ्चलमस्थिरं। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्। "इति गीतोपदिष्टः कठवल्लीश्वेताश्वतरादिकथितश्च योगो मोक्षसाधनम्। तच्च तृतीयसाधनाध्यायविषयः। 'मुमुक्षुभि'रिति वैराग्यजनकस्तदध्यायप्रथमपादः परमात्मनि रागजनको द्वितीयपादश्च सूच्यते। मुमुक्षावानेव ब्रह्मान्वेषणे अधिकारी। 'अन्तरन्वेष्टव्यं' इत्यादिकं श्रुतिपठितं स्मार्यते 'अन्तर्मृग्यते' इति। सर्वान्तरं ब्रह्मतत्त्वमन्तर्मृग्यते। भूमविद्यायां ध्यानवर्णने" ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः ध्यायन्तीवापः ध्यायन्तीव पर्वताः" इति श्राव्यते। सा च एतत्सूत्रविषयवाक्यम्। यो रोदसी व्याप्य स्थितः सर्ववेदान्तोक्तः एकपुरुषः, यस्मिन्नीश्वरशब्दो मुख्यो यथार्थश्चरः मुमुक्षुभिर्ब्रह्मलयार्थिभिः योऽध्यात्मयोगेनान्तरन्विष्यते स स्थाणुः। 'स्थाणुर्वा पुरुषो वा, स्थाणुर्वा चोरो वा' इत्यन्धकारे विकल्पनामुक्त्वा, यः पुरुषत्वेन वा चोरत्वेन वा भ्रान्तिविषयोऽभूत् स स्थाणुरिति बाधकसम्यग्ज्ञानमुच्यते तान्त्रिकव्यवहारेषु। 'चोरः स्थाणु' रिति वाक्यं बाधा(ध्या)र्थसामानाधिकरण्ये दृष्टान्तत्वेनोदाह्रियते वेदान्तग्रन्थेषु। अत्र यः सर्ववेदान्ततात्पर्य(विषय)भूत एकपुरुषः स स्थाणुरिति मुख्यतादात्म्यरूपैक्यगमकमेव सामानाधिकरण्यमिति वैचित्र्यरसप्रदर्शनमपि कविहृदयस्थमिव। अन्यत्र स्वोक्तं साक्षात्पुरुषं पुरुषोत्तमं एकपुरुषशब्देन परामृश्य तस्यैव स्थाणुत्वोक्त्यापि त्रिमूर्त्यैक्यप्रत्यायनं कविहृदयस्थमिव। तदेवैतत्कविसंमतं मतम्। निर्विकारोऽचलो निष्क्रियः कूटस्थस्थाणुरेक-

पुरुषः सर्वात्मा यस्मिन्नपीताः नामरूपविनिर्मुक्ताः तेन एकीभूय तदविभागमृच्छन्ति। 'तदेकोऽवशिष्टः शिवः केवलोऽहं' इति भगवत्पादीय दशश्लोक्यनुभवः। "ऐकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमोऽद्वैतः एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद य एवं वेद" इति माण्डूक्यप्रदर्शितमोक्षनिःश्रेयसानुभवश्चात्र स्मर्तव्यः। 'स्थाणुः स्थिरभक्तियोगसुलभः" अचलः स्थाणुः अचलप्रीतिध्यानयोगेन सुसाधः सुगमः इत्यौचित्यरसो व्यज्यते "स्थाणुः स्थिरभक्तीति समभिव्यवहारेण। "अचलत्वं चापेक्ष्य' इति ध्यानविषयं सूत्रम्। उणादिसूत्रकौमुदीवाक्येऽपि स्थाणुस्थिरपदयोस्समभिव्याहारो दृश्यते। स्थिरा अचला भक्तिः महनीयविषया अविच्छिन्ना प्रेममयस्मृतिसन्ततिः। सैव योगः साधनं, तेन सुलभः। न स्वमात्रचिन्तासन्ततिः किन्तु स्वान्तर्यामिणि भक्तियोगः य उपदिष्टः गीताषष्ठयोगाध्यायान्ते—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी,
'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्"
अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः'
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः।
'मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते"

इत्यादयो गीताश्लोकाः भक्तियोगतत्फलविधायकाः कविबुद्धिस्थाः अवधेयाः। 'अस्माभिर्निचाय्यत्वायैवानादेः कालात् अत्यल्पे अस्मद्धृदयौकसि तिष्ठते सर्वेश्वर' इत्युपदिष्टं भगवता सूत्रकारेण सर्वत्रप्रसिद्धोपदेशाधिकरणे "अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" इति सूत्रे। एवं संसारबन्धान्मोचयितुमेव हृदयगुहान्तरवस्थितः प्रीत्यावेशेनान्विष्यन्तं भक्तिमन्तमेनमनुगृह्य ब्रह्मनाड्यां प्रवेश्य

तद्द्वारा ऊर्ध्वं नयतीत्यप्युक्तं सूत्रकृता, 'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया " इतिचतुर्थाध्यायद्वितीयपादसूत्रे। अनादेः कलात् स्थिरतयावतिष्ठते हृदये इति व्यज्यते स्थाणुशब्देन। अस्मत्तोऽपि अस्माकं निःश्रेयसाधिगमे तस्य अपेक्षायास्तीव्रतरत्वात् भक्तियोगेन तत्प्राप्तिस्सुलभैव। सुलभे तस्मिन् तदनुग्रहेण प्रवेशलयादिलाभे करस्थं निःश्रेयसम्। भगवान् स्थाणुः तपस्यतां श्रेष्ठः। सर्वेषां तपस्विनां प्रधानभूतो योगेश्वरः। 'यः पुरस्तात् यतीनां। इति मालविकाग्निमित्रनान्दीश्लोके वर्णितः। शाकुन्तलसप्तमे 'यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिंबं स्थितः' इति तपस्यत्काश्यपतदाश्रमवर्णने। तत्र स्थाणुः शिलास्तंभो, भगवान् स्थाणुरेव वा स्यात्। तत्र काश्यपवंश्यकण्वेन संवर्धिता स्वकन्यात्वेनाभिमतिविषया शकुन्तलानायिका अत्र स्थाण्वभिन्ननारायणोरुसंभवा नायिका ॥

अभिरूपभूयिष्ठा नाटकद्रष्टृभावुकपरिषत्। 'प्रस्तावदेशकालादेवैशिष्ट्यात् प्रतिभाजुषां। योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा। " इति काव्यप्रकाशतृतीयोल्लासारंभे। 'सवासनानां नाट्यादौ रसस्यानुभवो भवेत्। निर्वासनास्तरङ्गान्तर्वेश्मकुड्यादिसंनिभाः " इति श्लोकः उदाहृतस्तद्व्याख्यायां 'प्रतिभाजुषां' इत्यस्य पदस्यार्थवर्णने। श्रुतिपुराणादिशास्त्रवासितानां सचेतसां उर्वशीपुरूरवश्चरित्रं कृत्स्नं सुविदितमेव भवेत्। मतिः श्रुतिशालिनी। एतन्नान्दीश्लोकश्रवणे पुरूरवसः उत्तरचरितं ध्रुवं तद्बुद्धौ संनिदध्यात् ॥

अस्मिन्नाटके एतन्नान्दीश्लोकस्यौचित्यचर्चायां अस्मदुद्भावितोपपत्तीनां कविहृदयस्थत्वे लिङ्गानि नाटकशरीरेऽन्विष्यामः। "ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री" इति प्रस्तावनान्तिमश्लोक एव सन्तीव भूयांसि लिङ्गानि अस्मदुद्भावनासंवादीनि। केयं नाटकनायिका ऊर्वशी। निवृत्ति(त्त)धर्मैकनिरतस्य सनकसनन्दनादिमुनिभ्यस्तद्धर्मप्रवचनाद्यर्थमेवावतीर्णस्य भगवतो नारायणस्य ऊरुसंभवेयं मुन्यङ्गजा। तपस्यन्तं तं अप्सरोभिर्मोहयितुं प्रवृत्तसुरनायकोद्यमस्य परिहसनविधया तदप्सरस्त्रीभ्यस्सर्वाभ्योऽपि अतिशयितलावण्यवतीमुर्वशीं स्वोरोः स मुनिरसृजत्। सर्वोत्तमाध्यात्माचार्यस्वरूपं लोकाय प्रदर्शयितुं नारायणमुनिरूपेण भगवान् नारायणोऽवततार। लोकोत्तरशिष्यस्वरूपनिदर्शनाय स्वयमेव भगवान् नररूपशिष्यत्वेनावततार। 'नरसखस्य' इति

तत्सूच्यते। नरनारायणावृषी गुरुशिष्यौ युगपदवतेरतुः। उभावपि परमपुरुष एव। 'मुनेः' ऊरूद्भवा, न लक्ष्मीनारायणस्योरूद्भवा, किन्तु तापसस्य नारायणमुनेरूरूद्भवा। न विरिंचसृष्टिरियं, किन्तु नारायणमुनिसृष्टिः। एतत्सृष्टावुपादानकारणं तन्मुनेरूरुः। निमित्तं च निवृत्त्ये(त्तै)कनिरतमुन्याचार्यहृदयम्। 'सुरस्त्री' इयं नूतनसर्वोत्तराप्सरस्त्वेन मुनिसृष्टा सर्वपूर्वसुरस्त्रीभ्यो विलक्षणा। यद्यपीयं सुरस्त्रीष्वप्सरस्स्वन्यतमाऽभवत्, अथापीयं सत्त्वैकवृत्तेराचार्यमुनेः सृष्टिः तदङ्गसंभवा, न केवलं तत्संकल्पसंभवा। अत एवेयं स्वनायकस्य पुरूरवसो वैराग्योपदेष्ट्री आचार्या अभवत्। जगद्गुरोरङ्गसंभवेयं कामसुखात् भर्तुः पूर्वमेव व्यरज्यत। आत्मानमनुधावन्तं तं वैराग्यमुपदिश्य निषिषेध। इदं सर्वमितिहासपुराणेभ्यः श्रुतिनश्च विद्वल्लोकप्रसिद्धं कविना नाटकारंभ एव नान्दीश्लोकपठनानन्तरं प्रयोगद्रष्टृसभ्यबुद्धौ संनिधाप्यतेऽनेन श्लोकेन। स्त्रियाः कामः पुंसः कामादष्टगुण इति पुराणेषु दृश्यते। स्वयं पुंसोऽपि पूर्वं विषयभोगास्सारतां निश्चित्य ततो विरज्य कान्तमुत्सृज्य तद्गृहाद्बहिरधावत्। 'कैलासनाथं' धनदं कुबेरं, भगवन्तं नटराजमेव वा। 'उपनृत्य' अद्भुतनर्तनेन सन्तोष्य। नटनकलामूलभूतं नटानां राजानं महेश्वरमपि स्वाद्भुतकलया सन्तोष्य। एतेन नटननैपुण्ये ईश्वरस्यापि बहुमतिपात्रमियमिति सूचितम्। न केवलं सौन्दर्ये किन्तु द्रष्टृमनोनयनहारिनर्तने कलायां चेयं सर्वाः सुरस्त्रियः अतिशेते। सेयं विबुधशत्रुभिः मार्गार्धे बन्दीकृता। सुरशत्रुभिः असुरैर्मध्येमार्गे वियति बद्धा। तत्सख्यः सर्वा अपि करुणं क्रन्दन्ति। असुराः सुरशत्रवः इमामपजह्रुः स्वभोगाय। विबुधपदमत्र साभिप्रायम्। विबोधस्य ज्ञानस्य शत्रुरासुरः कामभोगः। कामभोगमज्जने सुराः असुराश्च समानाः। विबुधशत्रुभिः बन्दीकृता। तेभ्यो मोचिता पुरूरवसा प्रबोधशत्रौ कामभोगे निमज्जनाय। विबोधशत्रुकामभोगावगाढत्वादुन्मज्जनं न लब्धम्। सुराः असुराः पुरूरवा वा सर्वे इमे एतस्याः कामभोग(गे)मज्जयितार एव। पुरूरवसः संयोगादनन्तरं सुचिरं अपारे कामभोगसागरे उन्मज्ज्य ततः समुत्थास्यतीयम्। कोऽस्यास्ततस्समुद्धर्ता। स्वयमेवेयं, आत्मनैव, तत उन्मंक्ष्यति। कथं? नरसखस्य नारायणमुनेरङ्गसंभवा तत्सृष्टा खल्वियम्। निवृत्तिनिरतजगदाचार्यमुन्यङ्गजातेयं कामभोगगाढमग्नमात्मानं स्वयमेव स्वोद्भवमहिम्ना निवर्तयितुं पारयामास। जगदाचार्यसंभवेयं स्वभर्तुर्विरक्त्युपदेष्ट्री

आचार्या अभवत्। पुरूरवाश्च उत्तमधार्मिकाविवेकिषु गणितः। सभापर्वाष्टसप्ततितमाध्याये धर्मराजावतारो विदुरः धर्मसूनुं, पुरूरवसमैलश्च" बुद्ध्या जयसि पाण्डव " इत्यवोचत्। तेनचास्य धार्मिकविवेकयग्रेसरत्वप्रसिद्धिर्व्यक्तीभवति। यद्यपि तादृशविवेकवानयं, उर्वश्या लोकोत्तरलावण्यादिना, तस्याः स्वस्मिन् स्वतः गाढलग्नहृदयतया च, नितान्तं कामवशीकृतो बहून्वर्षपूगान् तया सह अनन्यव्यापारतया रेमे। सुरस्त्रीत्वात् भोग सुदीर्घकालावस्थायिता दुस्त्यजता च, यथा मेनकाविषये विश्वामित्रमुनेः। मेनकाया अपि भूयो गरीयसीयं उर्वशी। अस्याश्चास्मिन् चन्द्रवत्, चन्द्रात् च कान्ते अमृतवत् प्रियभाषिणि असुरबन्धन महापदः स्वविमोचके महावीरे कृतज्ञता शृङ्गारितादिमूलिकाऽनुरागप्रवृत्तिरुदभवत्। सा च स्वयं स्वर्गादवतीर्य एनमभिससार रंभेव नलकूबरम्। मैत्रावरुणिशापश्चास्या अनुग्रह इवाभवत्। स्वर्गादपक्रम्य ततः प्रोष्य, भूलोके उषितव्यमिति शापः। तच्छापाभावे नास्याः स्वर्गान्निस्सारो वा भूलोके सुचिरवासो वा सुसम्भवः।" आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः " इति श्लोकेन असुरबन्दीकृतायाः राज्ञा मोचितायाः उर्वश्याः मूर्छावस्थातः शनैर्मुच्यमानत्वं वर्ण्यते। "अश्वइव रोमाणिविधूय पापं चन्द्र इव राहोर्मुच्यमानत्वं वर्ण्यते। "अश्व इव रोमाणि विधूय पापं चन्द्रइव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति अनादिसंसारमोहादात्यन्तिकमोक्षं प्राप्नुवन् शुद्धीभूतो जीवो वर्ण्यते। तद्वर्णनसदृशेयं वर्णनरीतिः। "धूमेनाव्रियते वह्निः यथाऽऽदर्शो मलेन च। यथोल्बेनावृतो गर्भः तथा तेनेदमावृतम्" इति ज्ञानिनो नित्यवैरिणा अज्ञानेन ज्ञानस्यावरणे दृष्टान्ताः अगीयन्त भगवता। उदाहृतच्छान्दोग्योपनिषन्मन्त्रं एतद्भगवद्वाक्यं च मनसि करोति कविरस्मिन् श्लोके। चन्द्रोदये तमसा मुच्यते रात्रिः। यत्र पूर्वं तमः प्रससार, तत्र तदपबाध्य निर्मला ज्योत्स्ना प्रकाशते। किं तेन? न सा ज्योत्स्ना ब्रह्मविद्याचन्द्रिका, यतः, 'तमसो मा ज्योतिर्गमय" इति बृहदारण्यके प्रार्थितः संसारतमसोऽत्यन्तहानेन ब्रह्मज्योतिरभिसंभवः संसिध्येत्।" नैशस्यार्चिर्हुतवहइव छिन्नभूयिष्ठधूमा" एकस्याः मोहमूर्छायाः उत्थाय-प्रबुध्य, अन्यस्यां काममोहमूर्छायां चिराय निपतिष्यति। " गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम्" कोयं प्रसादः? यमियमधिगच्छति।—

"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥
प्रसादे सर्वदुःखानां हानिरस्योजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥
नास्तिबुद्धिरयुक्तस्य नचायुक्तस्य भावना ।
न चाभावयतश्शान्तिरशान्तस्य कुतः सुखम् ॥ ”

इति भगवद्वाक्यं स्मारयतीव कवेः प्रसादशब्दः । अत्र इवशब्देन अत्रोक्तस्य प्रसादस्यात्यन्तिकपरमार्थत्वाभावः कथंचित्सूच्यत इव । पूर्वमेव वैराग्यसम्पत्त्या प्रबुद्धा नारायणात्संभूता ऊर्वशी भर्तारं वैराग्यमनुशशास। तस्य महावंशस्य वंशकरसुतदित्सया पुनरतिपरिमितकालं सहवसतिं विशालहृदयतया अभ्युपागच्छत् । पुरूरवाश्च कान्तोपदेशवीर्येण सुचिरभोगजनितालंबुद्ध्या च भृशं विरज्य लोकस्य वैराग्यमुपदिशन् गां पर्याटत् । अतिचिराविरतकामभोगेषु निमज्ज्य, अनन्तरं तत उत्तीर्य वैराग्यनिधिरभवत् । कामभोगासारतां च लोकस्य दृढं प्रख्यापयामास पुरूरवाः । रागिविरागिरूपावस्थाद्वयेऽपि स्वानुभूतिमता उपदिश्यमानो वैराग्योपदेशो वीर्यवत्तरो भवेत् । यथा पुत्रस्य यौवनमपि पुत्रात्परिगृहीतवतः, जराग्रस्तसमयेऽपि पुनर्युवा भूत्वा कामभोगेषु निमज्ज्य, तदनन्तरं तदसारतां निश्चितवतो ययातेर्मुखान्निस्सृतः—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

इति विरागोपदेशकश्लोकः । दिङ्मात्रमत्र प्रदर्शितम् ॥

|| श्रीः ||

# महाकविहृदयरत्नाकरे मरीचिचारुचर्चास्फूर्तिर्नाम चतुर्थो मणिः

## अथातोमरीचिचारुचर्चा

कस्यायं संग्रहोऽथेति ? आनन्तर्यस्येति ब्रूमः। कस्यानन्तर्यं ? तदुच्यते—विचारितमिदं "यत् लोके विचित्राणि कार्याणि पश्यामः, नर्ते चैतानि विचित्रेभ्यः कारणेभ्यः प्रथेरन्, कानि पुनस्तानि कारणानीति" निर्णीतं च—"अर्थाः देशाः कालाः कर्माणि च कारणानीति, यदवगमनायाखिलो वेदस्तदनुसारीणि पुराणेतिहासादीनि प्रावर्तन्तेति" निदर्शितं च भिषजां भैषज्यक्रियया। तावता च हृदयमप्युद्घाटितं भवति महाकवेः कालिदासस्य, य आह "फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इवे"ति। अयं ह्येवं वदतोऽस्य महाकवेरभिसन्धिः— यत् "देशकालकर्मवस्तुविशेषाः संस्कारमादधत्युच्चावचं शक्तिवासनाद्यपरनामधेयं। स यावत्फलमवतिष्ठमानः फलात्मना परिणमेत्, दुर्निर्णयश्चासौ संस्कारः स्वरूपतः, फलवैचित्र्येणैव केवलमनुमेयवैचित्र्यः। ततश्च सिद्धं—"अनैन्द्रियस्यैवंजातीयकस्य संस्कारस्य जनिं नातीत्य वेदमन्यत्प्रमाणमवगमयितुमीष्ट" इति। इति (अभिसंधिः) तदिदमुक्तं "श्रीशिवः शरणमिति"। यस्मिन् पुना राद्धा अमी संस्काराः समवयन्ति स पुनः कीदृक्षः स्यादिति विचिकित्सा। अत्राह— ननु नैवेहैवं विचिकित्सितुमीश्महे, किं कारणं ? नास्त्यन्यत्प्रमाणमिति। यदृते वेदान्नान्यत् प्रमाणं वासनामवगमयेत् कुतस्त्यास्य प्रसक्तिः वासनावतोऽवगमकतायाः इति। अत्रोच्यते *स्पृष्टिगतेर्नेति चेन्नानेकान्तात् * शास्त्रचिन्तकाः खल्वेवं कल्पयन्ति न प्रतिपत्तारः। तेतूष्णगुणमेनं प्रतियन्ति। मुमूर्षुं हि शयानं स्पृशन्तो वृद्धा यावतो-

ष्णिमानमुरसि शिरसि वावगच्छन्ति तावतावगच्छन्ति जीवतीति। यावता च नोपलभन्ते तावतावगच्छन्ति न जीवतीति। ततः स एष वासनाश्रयः उष्णगुणः स्यादित्यनुमिनुमः। अतोऽतीत्यापि वेदं प्रमाणमन्यदवगमकमस्तीति। तत्र वदामः—नैवमनुमातुं प्रभवामोऽनेकान्तात्, इति। व्यभिचरत्ययं हेतुश्शीतकायेषु सर्पादिष्विति, जीवत एव सर्पादीन् शीतानुपलभन्त इति। *स्पृष्टिगतेर्नेति चेन्नानेकान्तात्* अत्रोच्यते–नायमस्ति व्यभिचारः, स्पृष्टिगतेरेव। येऽपि हि शीतकायाः सर्पादयः तेऽप्यन्तःशरीरमुष्णिमानमावहन्तीति उष्णिम्न उपलंभानुपलंभयोरायतेते एव सर्पादीनां शीतकायानामपि जीविताजीवितावगती इति। नैतदेवं यतोऽनेकान्तोयं हेतुः। व्यभिचरति ह्ययं हेतुः स्तंबादिषु जीवेषु। स हि जन्तुः स्तंबो नाम, यः स्रवता तोयेन बहिर्निर्गच्छति, यत्खलु तोयमच्छिद्रेऽभिनवे मृण्मये करकादौ प्रक्षिप्तम्। नैव तु स्तंबजातीयान् मुमूर्षूनन्तर्बहिर्वा स्पृष्ट्वोष्णिमानमवगच्छेयुरनुमिनुयुर्वेति। *अथापि स्यात् "स्पृष्टिगतेर्नेति" * ननु स्पृष्टिर्यत्र संभवति मनुष्यादिषु न तत्रायं हेतुर्व्यभिचरतीति। *चेन्नानेकान्तात्।* इह हि सर्वो वासनाश्रयः साधनीयः प्रकृतः। तत्र च सर्वं साध्यं साध्नुवन् हेतुरुपन्यसितव्यः, नैव तूष्णिमोपलभ्यमानस्तादृश इति। तत्सुष्ठूक्तं नान्यत्प्रमाणमवगमयेद्वासनाश्रयमिति। अतश्च वासनावगमानन्तरं, वासनावतो जिज्ञासोदयात्, तस्य च लौकिकप्रमाणेनानवगतेरिति, (अथातः) अथ-अतः-शब्दयोरर्थः स्फुटितः। अत उदितपूर्वमेवेदं पुनरप्यनुसर्तव्यमापतति "श्रीशिवश्शरणमिति। किमुक्तं भवति; यावदुक्तं भवति वेदाः प्रमाणमिति तावदुक्तं भवति शिवः शरणमिति। शिवो वेदः, शरणं रक्षकं प्रमाणं सदिति। कंपुनरर्थममी प्रमिमते; जीवमादित्यं। तथाह्याह "आदित्यो वै जीवो विश्वैः।" तै-आर. १० प्रपा. १४ अनु, "सूर्य आत्मा जगतस्तस्थुषश्च" इति च। (स्थावराणां जंगमानां च सूर्यः

स्वरूपमिति तदर्थः)। *अगतेर्नेति चेन्नान्याभिसंधेः *ननु यथेह सूर्यं पश्यन्ति मरीचिमालिनं, नैवं पश्यन्ति जीवं मरीचिमालिनं, तदसंबद्ध-मुपचरितार्थं वेदवचनं तद्यथा "ग्रावाणः प्लवन्ते" "आदित्यो यूप" इति वा। इति चेत्-नेति ब्रूमः, यतोऽन्योस्याम्नायस्याभिसंधिरिति। न खलु सर्वचाक्षुषविषयता सूर्यभासं भासते जीवस्येत्यभिसंधत्तेऽयमाम्नायः, अपि त्वचिन्त्यमहिमानं मरीचिमालिनं यथा प्रमिमते प्रमाणानि तथैवैनमपीति। कानि पुनस्तानि प्रमाणानि, यान्यचिन्त्यमहिमान-मादित्यमवगमयन्ति। तत्राहाम्नायः—"स्मृतिः प्रत्यक्षमैतिह्यं। अनुमान-श्चतुष्टयं। एतैरादित्यमण्डलं। सर्वैरेव विधास्यते"। इति। तै. आ. १ प्र. २ अ, श्रुतिस्मृतिपुराणेतिहासादि, तदभिज्ञशिष्टानुभवाः (च) अवगमका आदित्यस्येति तदर्थः। नन्वेवं तह्यशक्यावगम आदित्यः प्राप्नोति, प्रागेव तु जीवः, यतः खल्वशक्योपसंहाराणीयन्ति प्रमाणानि पुरुषायुषजीविनापि प्रमातॄणां प्रवरेण—इति चेत् *अगतेर्नेतिचेत् न अन्याभिसंधेः। *नानवगतिरादित्यस्येति ब्रूमः, किं कारणं; अन्येन आम्नायादिना अभिसंधेः अवगमादिति शेषः। नायमभिसंधिः, सर्वाणि प्रमाणानि उपसंहर्तव्यानि, ततो ज्ञेय आदित्य इति। किं तर्हि—यावद्यावत्प्रमाणभूयस्ता तावत्तावदवगतिभूयस्तेति। अन्यत्र तथावगमात्। "भूय एव मा भगवान् विज्ञापयतु, भूय एव मा भगवान विज्ञापयतु" इति असकृदभ्यर्थयते विद्यार्थी, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्यनुशास्त्याचार्यः। तथेहापीति तदभिसंधेः। अथापि स्यात्-नन्विह प्रमाणचतुष्टयमुपन्यस्तं, नान्यत-मस्याप्येषु कार्त्स्न्येन शक्यावगमता, अतः—*अगतेर्नेति चेन्नान्याभि-संधेः। * "अन्येन आम्नायेनाभिसंधेः अवगमादिति शेषः। अस्ति चा-नुपदमेवैतच्चतुष्टयसारसंग्रहात्मा अपर आम्नायः—"सूर्यो मरीचिमादत्ते। सर्वस्मात् भुवनादधि। तस्याः पाकविशेषेण। स्मृतं कालविशेषणं।"

ष्णिमानमुरसि शिरसि वावगच्छन्ति तावतावगच्छन्ति जीवतीति। यावता च नोपलभन्ते तावतावगच्छन्ति न जीवतीति। ततः स एष वासनाश्रयः उष्णगुणः स्यादित्यनुमिनुमः। अतोऽतीत्यापि वेदं प्रमाण-मन्यदवगमकमस्तीति। तत्र वदामः—नैवमनुमातुं प्रभवामोऽनेकान्तात्, इति। व्यभिचरत्ययं हेतुश्शीतकायेषु सर्पादिष्विति, जीवत एव सर्पादीन् शीतानुपलभन्त इति। *स्पृष्टिगतेर्नेति चेन्नानेकान्तात् *अत्रोच्यते—नायमस्ति व्यभिचारः, स्पृष्टिगतेरेव। येऽपि हि शीतकायाः सर्पादयः तेऽप्यन्तःशरीरमुष्णिमानमावहन्तीति उष्णिम्न उपलंभानुपलंभयोरायतेते एव सर्पादीनां शीतकायानामपि जीविताजीवितावगती इति। नैतदेवं यतोऽनेकान्तोयं हेतुः। व्यभिचरति ह्ययं हेतु स्तंबादिषु जीवेषु। स हि जन्तुः स्तंबो नाम, यः स्रवता तोयेन बहिर्निर्गच्छति, यत्खलु तोयम-च्छिद्रेऽभिनवे मृण्यये करकादौ प्रक्षिप्तम्। नैव तु स्तंबजातीयान् मुमूर्षूनन्तर्बहिर्वा स्पृष्ट्वोष्णिमानमवगच्छेयुरनुमिनुयुर्वेति। *अथापि स्यात् "स्पृष्टिगतेर्नेति" *ननु स्पृष्टिर्यत्र संभवति मनुष्यादिषु न तत्रायं हेतुर्व्यभिचरतीति। *चेन्नानेकान्तात्।* इह हि सर्वो वासनाश्रयः साधनीयः प्रकृतः। तत्र च सर्वं साध्यं साध्नुवन् हेतुरुपन्यसितव्यः, नैव तूष्णिमोपलभ्यमानस्तादृश इति। तत्सुष्ठूक्तं नान्यत्प्रमाणमवगम-येद्वासनाश्रयमिति। अतश्च वासनावगमानन्तरं, वासनावतो जिज्ञासो-दयात्, तस्य च लौकिकप्रमाणेनानवगतेरिति, (अथातः) अथ-अतः-शब्दयोरर्थः स्फुटितः। अत उदितपूर्वमेवेदं पुनरप्यनुसर्तव्यमापतति "श्रीशिवश्शरणमिति। किमुक्तं भवति; यावदुक्तं भवति वेदाः प्रमाणमिति तावदुक्तं भवति शिवः शरणमिति। शिवो वेदः, शरणं रक्षकं प्रमाणं सदिति। कंपुनरर्थममी प्रमिमते; जीवमादित्यं। तथाह्याह "आदित्यो वै जीवो विश्वैः।" तै-आर. १० प्रपा. १४ अनु, "सूर्य आत्मा जगतस्तस्थुषश्च" इति च। (स्थावराणां जंगमानां च सूर्यः

स्वरूपमिति तदर्थः)। *अगतेर्नेति चेन्नान्याभिसंधेः *ननु यथेह सूर्यं पश्यन्ति मरीचिमालिनं, नैवं पश्यन्ति जीवं मरीचिमालिनं, तदसंबद्धमुपचरितार्थं वेदवचनं तद्यथा "ग्रावाणः प्लवन्ते" "आदित्यो यूप" इति वा। इति चेत्-नेति ब्रूमः, यतोऽन्योस्याम्नायस्याभिसंधिरिति। न खलु सर्वचाक्षुषविषयता सूर्यभासं भासते जीवस्येत्यभिसंधत्तेऽयमाम्नायः, अपि त्वचिन्त्यमहिमानं मरीचिमालिनं यथा प्रमिमते प्रमाणानि तथैवैनमपीति। कानि पुनस्तानि प्रमाणानि, यान्यचिन्त्यमहिमानमादित्यमवगमयन्ति। तत्राहाम्नायः—"स्मृतिः प्रत्यक्षमैतिह्यं। अनुमानश्चतुष्टयं। एतैरादित्यमण्डलं। सर्वैरेव विधास्यते"। इति। तै. आ. १ प्र. २ अ, श्रुतिस्मृतिपुराणेतिहासादि, तदभिज्ञशिष्टानुभवाः (च) अवगमका आदित्यस्येति तदर्थः। नन्वेवं तर्ह्यशक्यावगम आदित्यः प्राप्नोति, प्रागेव तु जीवः, यतः खल्वशक्योपसंहाराणीयन्ति प्रमाणानि पुरुषायुषजीविनापि प्रमातॄणां प्रवरेण—इति चेत् *अगतेर्नेतिचेत् न अन्याभिसंधेः। *नानवगतिरादित्यस्येति ब्रूमः, किं कारणं; अन्येन आम्नायादिना अभिसंधेः, अवगमादिति शेषः। नायमभिसंधिः, सर्वाणि प्रमाणानि उपसंहर्तव्यानि, ततो ज्ञेय आदित्य इति। किं तर्हि—यावद्यावत्प्रमाणभूयस्ता तावत्तावदवगतिभूयस्तेति। अन्यत्र तथावगमात्। "भूय एव मा भगवान् विज्ञापयतु, भूय एव मा भगवान् विज्ञापयतु" इति असकृदभ्यर्थयते विद्यार्थी, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्यनुशास्त्याचार्यः। तथेहापीति तदभिसंधेः। अथापि स्यात्-नन्विह प्रमाणचतुष्टयमुपन्यस्तं, नान्यतमस्याप्येषु कार्त्स्न्येन शक्यावगमता, अतः—*अगतेर्नेति चेन्नान्याभिसंधेः। * "अन्येन आम्नायेनाभिसंधेः अवगमादिति शेषः। अस्ति चानुपदमेवैतच्चतुष्टयसारसंग्रहात्मा अपर आम्नायः—"सूर्यो मरीचिमादत्ते। सर्वस्मात् भुवनादधि। तस्याः पाकविशेषेण। स्मृतं कालविशेषणं।"

इति। तत् यां च यावतीं च मात्रां अवगतेरासादयितुमलं प्रमाण-गंधमात्रमप्याजिघ्रतेति स्फुटितं। कीदृशं पुनरर्थमवगमयत्यसावाम्नायः; तदेवा(षा)भ्युक्तार्या–" सौरं मरीचिजालं चिन्तामणिवत्तनोति सर्वार्थान्। सत्वप्रतीतिविषयाश्चित्रा ये ये हि भासन्ते।" इति।

तमिममभिसंधिमभिव्यनक्ति महाकविः श्रीमान् कालिदासः—

" क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ' इति॥

यथाचायमर्थो महाकविवचनानिकुरुंबस्य 'तथाग्रे निपुणतरमुपपाद यिष्यते॥

" विरोधान्नेति चेन्नोभयानुगमात् "॥

नन्ववोचि कर्मादिष्वायत्ता विचित्रा वासना इति, वासनास्वाय-त्तानि विचित्राणि कार्याणि चेति " तद्विरुद्धं चात्थ मरीचिष्वायत्तानि विचित्राणि कार्याणीति, तत्कथमिवैष त्वमेवमाख्यान् श्रद्धेयवचनो भवे-त्परीक्षकाणामिति। चेत् न निरुन्ध्म इति ब्रूमः यत उभयमप्यनुगच्छामः, वासनास्विव मरीचिष्वप्यायतन्ते कार्याणीति॥ यद्येवं तर्हि मरीचयोऽपि चारु चर्चयितव्याः॥ तदिदमुक्तं—

" अथातो मरीचिचारुचर्चा " इति॥

" अथ – कार्यवैचित्र्यसाधकवासनावैचित्र्यसाधनानन्तरं "— अतः–वासनाश्रयस्वरूपाजिज्ञासायां प्राप्तायां, तस्य मरीचिमाल्यादित्य-रूपतावगतौ मरीचिमहिम्नोऽवश्यज्ञातव्यत्वप्राप्तेः॥ मरीचिचारुचर्चा–चार्विह मरीचयः चर्च्यन्ते॥" इति स्फुटार्थं सूत्रम्॥ तस्योप-व्याख्यानम्—

" विरोधान्नेति चेन्नोभयानुगमात् "॥

ननु नायमर्थोऽस्य वेदस्य " यत् अस्तीतिप्रतीतिविषयान् सर्वा-नप्यर्थान् मरीचयस्तन्वन्तीति, " यतो मरीचिपाकविशेषे कालविशेष

आयतते इत्येवाह वेदः, न पुनस्ते सर्वेप्यर्था आयतन्ते ये ये हीह-सत्त्वसंविदि विषयीभवन्तीति, अतो वेदार्थं विरुणद्धि भवांस्तथाऽऽचक्षाण इति चेत्—नेति ब्रूमः—उभयानुगमात् ॥ उभयस्य हीहानुगमः कर्तव्यः, उपक्रमस्योपसंहारस्य च, यतस्तयोरेकवाक्यतासंप्रत्ययः "सत्त्वप्रतीतिविषये मरीचिसंपर्कात् मरीचिपाकविशेषजः कालविशेष" इति ॥ न चैतादृशी एकवाक्यता साध्वी वैयधिकरण्यात्, "भुवनानि मरीचिभिः संपृच्यन्ते काले तु तदुत्था विशेष" इति ॥ अतो भुवनपरता कालस्योत कालपरता भुवनस्येति संशये "वेदो वा प्रायदर्शना"दित्यसंजातविरोधित्वन्यायेनोपक्रममनुरुन्ध्महे, निश्चिनुमहे च पदार्थमात्रपर एव कालशब्द इति ॥ तत्कथमिति चेत् ? कालिर्हि कामधेनुः, अतोऽखिलविशेषणमिति तदर्थः, कस्य वैषोऽखिलो विशेष इत्यपेक्षायां यत्र कारणानां मरीचीनां प्रसरः तत्रेति प्रकृतभुवनावगतेः ॥ अतः सुष्ठूक्तं उभयानुगमान्नायं दोष इति ॥

अवश्यं चैवमेवैतत्प्रतिपत्तव्यं, किं कारणं ? उभयानुगम एव ॥ "अत्र हि श्रुत्यादिचतुष्टयमादित्यगमकमाम्नाय आह ॥ इयत्प्रमाणप्रमितावनीशानो जनो यदादास्त तदा तामेनामस्योदासीनतां च्यावयामीति अपर आम्नायः प्रवर्तते" इत्यभिहितं तन्न प्रस्मर्तव्यम् ॥ तान्येतानि पुनश्चत्वारि प्रमाणानि न कालविशेषमेव प्रमिमाणानि परिसमाप्नुवन्ति, अपि त्वखिलविशेषान् ॥ तद्यथा "मरीचयः । ये शरीराण्यकल्पयन् । ते ते देहं कल्पयन्तु ।" इति ॥ अत्राखिलशरीराणि मरीचिकृतानि जायन्ते—यतः—"आदित्यो . .जीवो विश्वः कतमः स्वयंभु" इत्याम्नायः स्वयंभ्विति आदित्यमाह ॥ अतः आदित्यमरीचयः नश्वरसर्वकायकल्पकाः, धर्मोपचितदेहकल्पकाश्चावगताः ॥ एवं वाकोवाक्येन यातनाप्रदातारोऽवगम्यन्ते तद्यथा "पृच्छामि त्वा पापकृतः । यत्र यातयते यमः । त्वन्नस्तत् ब्रह्मन् प्रब्रूहि । यदि

वेत्थासतो गृहान् । (इति प्रश्ने) कश्यपादुदिताः सूर्याः । पापान्निघ्नन्ति सर्वदा ! रोदस्योरन्तर्देशेषु तत्र न्यस्यन्ते वासवैः । तेऽशरीराः प्रपद्यन्ते । यथाऽपुण्यस्य कर्मणः । अपाण्यपादकेशासः । तत्र तेऽयोनिजा जनाः । मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानाः स्वकर्मभिः । आशातिगाः क्रिमय इव । ततः पूयन्ते वासवैः ॥" (इति समाधानम्) तदेतदग्रे निरूपयिष्यामः ॥ अतो विस्तृतशास्त्रादिप्रमाणानां, संग्राहकाम्नायस्य च इत्युभयोरनुगमात्—उभयानुगममाश्रित्य (ल्यब्लोपे पंचमी) न विरोधः ।। इति वदाम इति शेषः ॥

"विरोधान्नेति चेन्नोभयानुगमात्" नन्विहानुपदमेवास्याम्नायस्य कालाः मरीचिवैचित्र्यायत्तविशेषाः प्रपञ्चयन्ते ॥ तथाह्याम्नायः "साकंजानां सप्तथमाहुरेकजं । षडुद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः" इति ॥ "अवियुक्तसप्तरश्मिकस्यादित्यस्यैको रश्मिः सप्तमः श्रेष्ठः । शिक्यस्योद्यमा इवेतरे षट् रश्मयः सप्तमस्योपसर्जनीभूताः षड्तुनिष्पादकाः प्रकाशरूपत्वादृषयः तेषां स्थानानि अभिमतानि वसन्तादिरूपेण सर्वेश्वरेण विहितानि ॥ तानि च स्थानानि शीतोष्णादिविचित्ररूपेण प्रवर्तन्ते क्रमशः" ॥ इत्याम्नायार्थः ॥ तमेव क्रमं ऋतुस्वभावकीर्तनेनाहापर आम्नायः—"ऋतुर्ऋतुना नुद्यमानः । विननादाभिधावः । षष्टिश्च त्रिंशका वल्गाः । शुक्लकृष्णौ च षाष्टिकौ ।" इति ॥ "अविच्छिन्ना हि ऋतूनां प्रवृत्तिः, अतो नोदनोदकतावादः, अभिधावतावादः, ऋतौ क्रियमाणजननादं ऋतावारोप्य नादकर्तृत्ववादश्चर्तौ । त्रिंशन्मुहूर्तात्मकदिवसानां वर्गाणां षष्टिः, त्रिंशत्त्रिंशद्दिनात्मक शुक्लकृष्णपक्षौ च एकस्मिन्नृतौ भवन्तीति" तदर्थः ॥ तानेतानृतून्विवृण्वन्त्यपरे आम्नायाः—"सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिः सह । संवत्सरस्य सवितुः । प्रैषकृत् प्रथमः स्मृतः" इति ॥ ऋतु-

प्रेरकसंवत्सराभिधदेवस्याज्ञाकरो वसन्त ऋतुः रञ्जितवस्त्र वसानैः हेतुभिः आदित्यावतारमूर्तैः रश्मिरूपैः सह शुद्धजलदानदक्षः प्रथमो भवति" इति तदर्थः॥ यत् पुनः ऋतुः विननादेति उक्तं॥ तत्र वसन्तकालजं नादमाह--

"अमूनादयतेत्यन्यान्। अमूंश्च परिरक्षतः। एता वाचः प्रयुज्यन्ते। यत्रैतदुपदृश्यते" इति वसन्तकालभवयज्ञोपनयनाद्यागत-जनानुद्दिश्य अमून् प्राशयत अन्यान् परिरक्षत इत्यादिवाचः वसन्ततौं वदन्ति जनाः इत्यर्थः॥ अथ ग्रीष्ममाह—

"शुक्लवासा रुद्रगणः। ग्रीष्मेण वर्तते सह। निजहन् पृथिवीं सर्वां। ज्योतिषाऽप्रतिरूयेन सह:" शुक्लवस्त्रः रुद्रगणः आदित्यरश्मिरूपः अप्रतिमतापेन सर्वपृथिवीतापन. आवर्तते" इत्यर्थः॥ अथ वर्षर्तुमाह—

"विश्वरूपाणि वासांसि। आदित्यानां निबोधत। संवत्सरीणं कर्मफलं। वर्षाभिर्दद्तां सह।" इति। "आदित्याभिधरश्मिविशेषाः वर्षर्तुनिष्पादकाः वृष्टिभिः एकैकसंवत्सरभोग्यव्रीह्यादिकं तत्तत्प्राणि-संचितजन्मांतरकर्मानुगुणं ददति" इति तदर्थः। ये ये तु तत्तदृतौ विशेषाः आम्नायबोधिताः ते तत एव द्रष्टव्याः विस्तरभयान्न लिख्यन्ते। अथ शरदमाह—

"अक्षिदुःखोत्थितस्यैव। विप्रसन्ने कनीनिके। आंक्ते चाद्रुणं नास्ति। ऋभूणां तन्निबोधत"। इति। शरदृतुनिष्पादकानां ऋभु-संज्ञकादित्यरश्मीनां सामर्थ्यं निबोधत-इह वार्षिके नेत्ररोगापगमात् सर्व-जनकनीनिके प्रसन्ने भवतः। तत एव कारणात् अंजनादिना संस्कुर्व-न्ति नेत्रं जनाः। अत्रोपरि अनेकविशेषान् वर्णयित्वा "शरद्यत्रोप-दृश्यते" इत्युपसंहारात् शरदृतुनिर्णयः। अथ हेमन्तमाह—

"अभिधून्वन्तोऽभिघ्नन्त इव। वातवन्तो मरुद्गणाः"। मरुद्-गणाख्यरश्मिविशेषाः हेमन्तनिष्पादकाः। ते सर्वत्र कंपयन्ति अभिघ्नन्ति

च सर्वान्। यत एते प्रबलवातवन्तो भवन्ति। अत्राप्यन्ते "हेमतश्चक्षुर्षी विद्यात्" इति हेमन्तस्य कीर्तनात् उपक्रमस्य तत्परत्वं। अथ शिशिरर्तुमाह—

"दुर्भिक्षं देवलोकेषु। मनूनां (नामु) उदकं गृहे।
एता वाचः प्रवदन्तीः वैद्युतो यान्ति शैशिरीः॥

इहर्तावन्तरिक्षे जलदौर्भिक्ष्यं, मनुष्यगृहीयकूपादिष्वेवोदकं, इत्येवं वदन्त्यः प्रजाः वैद्युतः विद्युदुपलक्षिततापयुक्ताः मार्गे गच्छन्ति। इत्युपक्रमार्थः। "अतिताम्राणि वासांसि अष्टिवज्रि शतघ्नि च। विश्वे देवा विप्रहरन्ति। अग्निजिह्वा असश्चत।" इत्युपसंहारः शिशिरर्तुनिष्पादकविश्वेदेवाख्यरश्मयः अग्निजिह्वाः तापिन इत्यर्थः। अत्रर्तौ युद्धार्थमुद्यता जनाः अष्ट्यादिभिरायुधैर्युताः जये सति उच्चैश्शब्दं कुर्वन्ति। ताम्रवर्णवस्त्राश्च जना भवन्ति इति तद्द्वयं रश्मिष्वारोप्यते। इति अवगन्तव्यम्। तदेवमेते वाक्यशेषरूपा आम्नायाः कालपरतामेवोपक्रमस्य गमयन्ति। "संदिग्धेषु (च) वाक्यशेषात्" इति मीमांसकमर्यादा। यथा ह्यक्ताः शर्करा उपदधातीति आक्षिप्तानि अंजनसाधनद्रव्याणि सर्वाणि न गृह्णीमः यतो वाक्यशेषं "तेजो वै घृतं" इत्येवंरूपं विरुंध्म इति, तथैव सत्त्वप्रतीतिविषयसर्वपदार्थान् गृह्णन्तोऽपि तांस्तानृतून्विवृण्वन्तः आम्नायानपि विरुंध्म इति, विरोधान्नायमर्थः प्रतितिष्ठतीति चेत्—"तत्रैवं पृष्टो भवान् व्याचष्टां "वेदस्मृत्यादि, प्रमाणचतुष्टयं, आदित्यमंडलं च प्रमेयं उपक्षिप्तं, तत्र चेयद्भिः प्रमाणैः न काल एव प्रमीयते, अपि त्वखिला अर्थाः, तदत्रोपक्रान्तार्थत्यागरूपात् विरोधात् कथं भवान् मुच्येत" इति॥

यदि मन्येथाः "उभयानुगमान्मुच्येयेति—"यथैव कालः प्रमेयः तथैवान्येप्यर्थाः। नचास्ति कालातिरिक्तगमकत्वं परिसंचक्षाणः शब्दः आम्नाये। अत उभयमप्यनुगच्छामः, कालबोधकतामितरबोध-

कतां च, यदि वाक्यशेषं न पर्यालोचयेम, पर्यालोचयन्तस्तु काल-परतया संकोचयाम इति" (तदिहेदृशोऽपि अस्य सूत्रस्यार्थः स्पष्टी-कृतः)"। तत्रोच्यते उभयानुगमान्नायं विरोध इति। अवश्यं हि त्वयाप्युभयमनुगन्तव्यं प्राप्नोति कालश्चार्थश्चेति। कथमिति चेत् तत्र त्वमप्येवं पृष्टो व्याचष्टां "अयं वसंतः अयं ग्रीष्म इति कथमेष संप्रत्यय इति। तत्तदृतौ जायमानैः पदार्थविशेषैः तत्तत्संप्रत्यय इति चेत् हन्त पदार्थविशेषजनिः किंनिबंधनेति पुनरपि पर्यनुयोगान्न मुच्येथाः। वयं तु पश्यामः ऋतुर्वर्तुजपदार्थविशेषो वेत्युभयमपि तत्त-द्रश्मिनिबंधनमेवेति, उभयमप्यनुगन्तव्यं भवतीति। न भवानपीह हेतुम-न्यमुपदर्शयितुमीष्ट इत्यवश्यमुभयमनुगन्तव्यं भवतापि भवतीति स्थितम्॥

एवं वा—"उभयानुगमात्" इत्यस्यार्थः। अस्ति तैत्तिरीयक-ब्राह्मणे द्वितीयाष्टके चतुर्थः प्रपाठकः "उभये वा एते प्रजापतेरध्य-सृज्यन्त"। इत्येवमुपक्रमकः सः उभयशब्देन विवक्ष्यते। तस्मिन्न-नुगमात् इत्यर्थः। कस्य पुनरत्रानुगमः? इति चेत् कालस्यार्थस्य चानुगम इति वदामः। तथाहि—चातुर्मास्ययाजिनोऽक्षय्यं फलं बोध-यितुं तन्नाशास्तित्वनास्तित्वे विचार्य निर्णीते नास्तित्वे, तत्र चतुत्वा-पत्तिर्हेतुरुक्ता। न चैतत्संगच्छते। फलं हि नाम सुखं वा साक्षात्सुख-साधनं वा न चैष ऋतुभावः तदन्यतरात्मेति। अतोऽवश्यमेवं प्रति-पत्तव्यं तत्तदृतुभवाखिलार्थनिष्पादनसामर्थ्यं, तदनु तद्भोगश्चेति फल-मिति। प्रकृतां श्रुतिमनुरुंधानैश्च रश्मिनिष्पाद्यत्वं तदुभयस्य समर्थितं तन्न प्रस्मर्तव्यं। ततश्च तत्तदृतुतद्भवपदार्थजनकरश्म्यानुकूल्ये तदाम्ना-यस्याभिसंधिरनुगम्यते। एवमिहाप्युभयानुगमो रश्मिनिष्पाद्यत्वा-विशेषात्। नातोऽत्र कालपरा आम्नाया मात्रयापि दुष्यन्ति। अयमत्र चातुर्मास्यफलं शास्ता आम्नायः॥

"प्र चातुर्मास्ययाजी मीयता ३ न प्रमीयता ३ इति। ब्रह्मवादिनो वदन्ति। (न प्रमीयते न मरिष्यति, न फलवियुक्तो भवतीति कृत्वा हेतुमाह) जीवन्वा एष ऋतूनप्येति। (ऋतुभावमेव मरणकालिकऋतुप्राप्तिद्वारा तदादिकसर्वर्तुभावेन विवृणोति) यदि वसन्ता प्रमीयते। वसन्तो भवति। यदि ग्रीष्मे ग्रीष्मः। यदि वर्षासु वर्षाः। यदि शरदि शरत्। यदि हेमन् हेमन्तः" इत्यादिः। यत् पुनः संदिग्धेषु वाक्यशेषादिति न्यायोपन्यसनं, तदुक्तरीत्या अस्मदनुकूलमिति स्पष्टम्। असंजातविरोधित्वन्यायस्तु प्रतिपक्षिविरुद्धः अस्मदनुकूलः स्थित एव॥

एवमपि "उभयानुगमादि"त्यस्यार्थः —"उभये" इति प्रपाठकोक्तकालतद्भवार्थयोः अनुगमात् अनुसरणात्। पंचमप्रपाठकेनेति शेषः। तत्र हि संवत्सरानुष्ठानसाध्ये फले देवासुराणां विरोधप्रसक्तौ असुराणां चत्वारो मासाः इन्द्रस्वामिकदेवैर्नाशिताः वैश्वदेवमनुतिष्ठद्भिः, एवं वरुणस्वामिकैर्वरुणप्रघासमनुतिष्ठद्भिरपि, तथा सोमस्वामिकैस्साकमेधमनुतिष्ठद्भिः। एवं द्वादशमासात्मकसंवत्सरनाशः सिद्धः। न चात्र संवत्सरमात्रनाशबोधनेन प्रकृतफलोपक्रमेण संगतिः स्यात्, अतः कालेन तद्भवार्थग्रहणमावश्यकं। अत एवोपसंहारः अर्थपरः स्पष्टमवगम्यते। तथाह्याम्नायः—"देवासुराः संयत्ता आसन्। ते संवत्सरे व्यायच्छन्त। तान्देवाश्चातुर्मास्यैरेवाभिप्रायुञ्जत। वैश्वदेवैश्चतुरो मासोऽवृञ्जतेंद्रराजानः। वरुणप्रघासैश्चतुरो मासोऽवृञ्जत वरुणराजानः। साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः। या संवत्सर उपजीवासीत्। तामेषामवृञ्जत। . . . . . यैषा संवत्सर उपजीवा। वृंक्ते तां भ्रातृव्यस्य। क्षुधास्य भ्रातृव्यः परा भवति।" इति यः पुनस्सर्वर्तुरूपो भवति भवत्यसौ संवत्सरात्मा, षड्ऋतुरूपत्वात्संवत्सरस्य। यः पुनस्संवत्सरात्मा स प्रजापतिर्भवति, तत्तदृतुभैवर्थैः प्रजापालनात् आत्माभिलषिता

खिलार्थानां संपादनभोगाभ्यां जिहासिताखिलानर्थहानाच्च। तदाहाम्नायः चातुर्मास्यविधिशेषः—"ऋतुर्भूत्वा संवत्सरमप्येति। संवत्सरः प्रजापतिः। प्रजापतिर्वावैषः" इति॥

एतेनाश्वमेधादेरप्येवंजातीयकफलवत्त्वं व्याख्यातं। यतोऽश्वमेधादेरपि प्रजापतिभावः फलं श्रूयते "प्रजापतिं वा एष ईप्सतीत्याहुः "योऽश्वमेधेन यजत इति" इति। अस्यैव प्रजापतिभावस्य विवृतिमनुशास्त्यपर आम्नायः सर्वानर्थनिवृत्तिसाधनतया सर्वेष्टसाधनतया च "योऽश्वमेधेन यजते सर्व एष भवति सर्वस्य वा एषा प्रायश्चित्तिस्सर्वस्य भेषजं सर्वं वा एतेन पाप्मानं देवा अतरन् अपि वा एतेन ब्रह्महत्यामतरन् तस्मादन्योऽपि सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति। दिङ्मात्रमिहोभयानुगमाम्नायानामुक्तं विस्तरभिया नोच्चावचा आम्नाया एवमर्थका उदाह्रियन्ते। ततश्च त्रिवृच्चर्वश्ववालाधिकरणन्यायेन "शास्त्रस्था वा तन्निमित्तत्वात्" इति सूत्रकृदुक्तेन शास्त्रप्रसिध्या क्वचिन्निर्णीतार्थकस्य पदस्यापरत्र प्रयोगेऽपि तादृगर्थकत्वमिति सिद्धेः ईदृशस्य न्यायस्य उक्तपूर्वोक्ताधिकरणन्यायस्य चेत्युभयस्यानुगमात् न पूर्वपक्ष्युक्तविरोधगन्धोऽपीति सिद्धम्। सिद्धं च सत्वसंविदनुविद्धस्यार्थमात्रस्य मरीचिवैचित्र्यायत्तोऽखिलो विशेष इति॥

नन्वसौ विचारस्तादृशं विचारमनुकरोति, यो वंध्यापुत्रं विषयीकरोति "किमेष वंध्यानन्दन आदौ शास्त्राण्यध्याप्यः? उताहो वेदानिति;। न खल्वेते मन्त्राः कैमर्थ्यमाशासीरन्, यत्कारणं क्षुद्रचयनं विन्ययोजिषतेति। तथा हि सूत्रकार आदिशति—"स्मृतिः प्रत्यक्षमैतिह्यं" इत्यष्टौ मध्ये—इति। अयमर्थः—आरुणकेतुकाख्यः चयनविशेषः काठकप्रथमप्रपाठके श्रूयते। तदिदं चयनं नेष्टकाभिः अपितु अद्भिः कर्तव्यं। विहिते तत्तत्स्थले इष्टकाबुद्ध्या आपः उपधेयाः। तत्र कानि चन उपधानानि प्रथमानुवाकोक्तमन्त्रकरणकानि विहितानि,

द्वितीयेऽनुवाके तथैवान्यानि विधीयन्ते। अत्र पूर्वसूत्रात् हस्तग्राभमबीष्टका उपदध्यात्" इत्यनुवर्तते। तथाच "स्मृतिः प्रत्यक्षमित्यादिभिरष्टभिर्मन्त्रैः अविष्टकाः हस्तेन गृहीत्वा मध्ये–स्थण्डिलमध्ये उपदध्यात् इति वाक्यार्थः। तदिहाकाङ्क्षैव शशविषाणायते। व्याप्तश्चाकाङ्क्षयाविनियोगौचितीविचारो नाम। इह च व्यापिनी आकांक्षा व्यावर्तमाना स्वव्याप्यं अर्थविशेषविषयविनियोगविचारमपि व्यावर्तयतीति। नो खल्वलब्धात्मनो वंध्यानन्दनस्य "इदं वैषोऽध्याप्योऽदो वेति विचारोऽवकाशेतेति ॥

ननु विषम उपन्यासः वंध्यासुतवदिति, अशक्यसंभावनो वंध्यायाः सुतो नाम शक्यसंभावना तु विनियुक्तानां मन्त्राणां आकांक्षा, यतस्तेषामार्हन्ती अर्थविशेषावगमिका स्पष्टं प्रकाशते। तत् क्षुद्रचयनविनियोगेन प्रतिबद्धाप्याकांक्षा आर्हन्त्योत्तमितेति लब्धात्मेति विचारं प्रवर्तयेदिति चेत् न ॥

इतरेषां चानुपलब्धेः ॥

सन्ति हीतरेऽपि तत्तदर्थसमर्थाः पदार्थाः, यथा आहवनीयाद्यग्नयः स्फ्यादयो वा। "अर्हन्ति चेह प्रथमे होमादावाधारीभवितुं पाकादिकर्मभिनिर्वर्तयितुं च" अथापि नैनानयज्ञिये कर्मण्युपयुञ्ज्महे किंकारणम्; यज्ञियकर्मसु विनियोगान्निराकाङ्क्षा इति। तथैव अर्हन्ति चरमे उद्धननादिकं याज्ञियं कर्म निर्वर्तयितुं गार्ह्यं कार्षिकं वा साधयितुं, अथापि नैनानयाज्ञिये उपयुञ्ज्महे। किं कारणं; निराकांक्षत्वमेव। तस्मात् विनियुक्तानामितरेषां पुनर्विनियोगानुपलब्धेः नैषा कल्पना कल्याणीति ॥

विरोधान्नेति चेन्नोभयानुगमात्। गृहस्थैर्नैष्ठिकब्रह्मचारिभिरुभयैरपि अनुगमात् स्वाध्यायाध्ययनविधेः, विनियुक्तकर्माङ्गतातिरेकेण तत्तदर्थबोधकता अवश्यमास्थेयेति शेषः। अयमभिसंधिः— 'स्वाध्यायोध्येतव्यः इत्यस्ति चोदना त्रैवर्णिकान् प्रति। अध्ययनस्य

चाक्षरावाप्त्या अर्थज्ञानं फलं, ततः कर्मानुष्ठानात् कर्मफलप्राप्तिरिति मीमांसकमर्यादा। यानि पुनर्विशिष्य तत्तत्क्रतुविधायकवाक्याध्ययनमात्रेण तत्तत्क्रतुफलादीनि, सामान्यतश्च ऋगाद्यध्ययनमात्रेण पयः-कुल्यादीनि फलानि प्रकृतचोदनानुपदं श्रूयन्ते "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति, यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिभवन्ति यद्यजूंषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्याः यत् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतिभिरेव-तद्देवांस्तर्पयति" इत्यादिना। तान्यनुष्ठातृभ्यः प्ररोचयितुं, ततस्तान् प्रवर्तयितुं च, न वस्तुतोऽध्ययनमात्रात् तत्तत्फलसिद्ध्यभिप्रायेण, यद्यध्ययनेनैव तानि सिद्ध्येयुः, तर्हि तादृशफलार्थं विहितेषु बह्वायाससाध्येषु कर्मसु कस्यापि प्रवृत्त्यभावापत्तेः, तत्तादृशानि महान्ति कर्माणि व्यर्थान्यापतेयुः, सुलभोपायेष्वेव लोकप्रवृत्तेरौत्सर्गिकत्वात् इति मीमांसा-मर्यादा। अयं च निष्कर्षः कर्माधिकृतगृहस्थेष्वेव संभवेत्। ये पुनर्नैष्ठिकाः ब्रह्मचारिणः, तेऽप्यधीयीरन्नेव वेदं, न तु कर्माण्यनुष्ठातुं प्रभवेयुः, गृहस्थत्वाभावात्। तेष्विमानि वचनानि फलबोधकान्येव जपमात्रात्। अर्थेऽप्यर्थं जानीयुः भूयिष्ठानि तानि फलानि स्युः" इति भट्टपादाः अभिप्रयन्ति। तथाहि वार्तिकम्॥

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसंगात् व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते, तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्म-चर्योपदेशः" इति॥

अनेन चैवमर्थो निर्गलति "यद्धि वाक्यं क्वचिदधिकारिणि प्रतिबद्धनैसर्गिकस्वार्थबोधनसामर्थ्यं, तदेवान्यस्मिन्नधिकारिणि अप्रति-बद्धतादृक्सामर्थ्यं भवतीति" प्रपञ्चितश्चायमर्थो "मनसो वशे

सर्वमिदं बभूव" इति श्रुत्यर्थविमर्शिन्यामस्मत्कृतायामात्ममीमांसायामिति अधिकं तत एवावगन्तव्यम्। तस्मादुभयानुगमान्नोक्तो विरोधः इति सिद्धम् ॥

ननु तर्हि निरुक्तक्षुद्रचयनकर्तॄणां सूर्यमहिमावगतिरेतच्छ्रुतितो न लभ्येतेति विरोधः प्राप्नोति, अतोऽनवबोधकत्वे अधिकारिविशेषं प्रति अवश्यं आश्रीयमाणे अवैरूप्याय सर्वाधिकारिणं प्रत्यपि तथाङ्गीकार एव न्याय्यः, इति विरोधान्नायं पक्षः सुन्दर इति चेत, न उभयानुगमात्, उभयैरपि अर्थपरत्वानुगमस्यैवाङ्गीकार्यत्वात्। यथाह भगवान् सूत्रकारः शेषलक्षणे ॥

"अर्थाभिधानसंबंधात् मन्त्रेषु शेषभावः स्यात् तस्मादुत्पत्तिसंयोगोऽर्थेन नित्यसंबंधात्" इति ॥

"इह हि अभिधेयमर्थमनुरुन्धानैरेवाङ्गत्वं बुध्यता, नाङ्गत्वमनुरुन्धानैरभिधेयोऽर्थो लक्ष्यो वार्थो निर्णीयतामिति सूत्रकृदभिसन्धिः, शब्दार्थसंबंधनित्यता चेह निदानं सूत्रकृदभिमतं। सत्येवं तादृगर्थानुगतिरुभयेषामप्यवर्जनीयेति अर्थपरत्वमेव सूत्रकृत्संमतम्। लक्ष्यार्थपरता पुनर्बलवता विनियोगेन कारिता, न चयता प्रथमावगताभिधेयार्थाबोधकत्वं, प्रथमावगतत्वादेव। ननु यदि प्रथमावगतोऽर्थोऽनुष्ठातॄणामनुष्ठानौपयिकतां नाश्नुवीत, आपातप्रतिपन्नवत् अविद्यमानकल्पो हेय एव, नैतदर्थे तादृशी श्रुतिः प्रमाणं, तद्यदि बलात् तदर्थपरताप्यास्थीयेत, अप्रमाणस्य प्रामाण्यग्रहविरोध आपद्येतेति चेत्—

विरोधान्नेति चेत्—नोभयानुगमात्।

उत्पत्तौ ज्ञप्तौ चेत्युभयत्र प्रामाण्यस्य स्वतस्त्वाभ्युपगमात मीमांसकैः। कथमन्यथा निरंकुशमेव सूत्रकृत् "अर्थाभिधानसंबंधात् मंत्रेषु शेषभावः स्यादित्याचक्षीत। यदि विनियोगमनुरुध्यैवार्थपरताश्रीयेत, स्फुटं परतः प्रामाण्यमङ्गीकृतं स्यात्, तस्मान्नायमपि पक्षः स्यात् यत्र तु प्रमाणां-

तरं बलवदुपलभ्येत तत्र तदनुरोधेन लक्ष्यार्थानुसरणेऽपि, लक्ष्यार्थद्वारतया अभिधेयार्थांगीकृतिः सर्वैरेव संमता, लक्षणा ह्यन्यथा आत्मानमेव न विन्देत, शक्यसंबंधा लक्षणा बोध्यसंबंधो वा लक्षणेति यतस्तां लक्ष-यन्ति, यः पुनरवगतेऽर्थे न मन्त्रा विनियोगार्हा इति तादृगर्थस्यैव हेयता-वादः सोऽप्यनेन परास्तः, नापि क्वचिद्विनियुक्तं मन्त्रं स्वमनीषिकयान्यत्र विनियुञ्ज्महे, बुध्यमानमर्थं यतः प्रतीम एव केवलमिति ॥

अथ वैनमाक्षेपमेवं समादध्मः—अवश्यं चैवमेवैतत् प्रतिपत्तव्यं, किं तत् शक्यार्थपरत्वं किं कारणम्? उभयानुगमः। उभयत्र मन्त्रद्वये अर्थपरत्वानुसरण, भाष्यकारस्यांत शेषः। "स्मृतिः प्रत्यक्ष "मिति प्रथममन्त्रं सूर्यमहिमवर्णनपरमुपवर्ण्य हि भाष्यकारः "हे अविष्टके त्वं तथाविधसूर्यमण्डलरूपासीति स्तुतिः" इति अन्ते व्याचष्ट। द्वितीय-मन्त्रमप्येवमुपवर्ण्य "ईदृशकालरूपा त्वमसीति स्तुतिः एवं सर्वत्र योज्यम्" इत्यत्यादिशत्। यद्येवंजातीयकानामर्थपरता नाभविष्यत्, नैवं भाष्यकृत् व्याख्यास्यत्, अत्यदक्ष्यद्वा। तस्मादर्थपरतावगतिः। तदिदं सर्वमभिसंहितं संप्रदायविद्भिः ॥

अतोऽवबोधकत्वेन दुष्टकारणवर्जनात्।

अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः" इति वदद्भिः ॥

अथवेममाक्षेपमेवमपि समादध्मः। अवश्यं शक्यार्थपरताङ्गी-कार्या, किं कारणं? संप्रदायविदङ्गीकारः विनियुक्तार्थपरत्वस्य शक्यार्थ-परत्वस्य च। तथा चोभयानुगम इत्येव कारणं स्पष्टम्। यथाहि प्रकृतेऽर्थांतरपरस्यैव मन्त्रस्य अनुपधानकरणत्वं, एवमेवान्यत्रापि अर्थां-तरपरस्य मन्त्रस्य अब्द्रव्यकहोमांगत्वं अंगीक्रियते। तथाहि—

"अद्भ्यो वेहतमालभेतेति" कश्चित्पशुद्रव्यकः अब्देवत्यः यागो विहितः। गर्भघातिनी गौः वेहदित्युच्यते। तद्यागापेक्षितयाज्यापुरोनु-वाक्यापाठानन्तरं नव मन्त्राः अधीयन्ते। तेषां विनियोगं पूर्वोक्त-

यागांगोपहोमेष्वाह सूत्रकारः "तत्र सलिलमुपजुहुयात्" इति। नक्षत्रेष्टयादौ चोपहोमाः प्रधानयागीयदेवताका एव दृष्टा इति इहापि बहुवचनान्ताप्छब्दवाच्या एवांगीकार्याः मीमांसकैस्तथैवांगीकारात्। इन्द्रमहेन्द्रादिपर्यायशब्दस्थलेऽपि भिन्ना हि देवतास्तैरंगीक्रियन्ते। इह पुनरुषहोममन्त्रैर्नापः देवताः बोध्यन्ते। किं तु प्रलयजगदुत्पत्त्योरन्तरालावस्था बोध्यते॥

तत्र प्रथमो मन्त्रः—"नासदासीन्नो सदासीत्तदानीम्। नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुह कस्य शर्मन्। अंभः किमासीद्गहनं गभीरम्" इति। अयमर्थः—"असदासीत्–तुच्छमेवासीदिति न, भविष्यत्त्वाज्जगतः, सत्–अभिव्यक्तं नासीत्, अनुपलब्धेः। अभिव्यक्तस्याभावः उपरितथनभागेन प्रपञ्चयते–यतो रजश्शब्दोपलक्षितगुणत्रयस्य, व्योमोपालक्षितपंचभूतानां, अपरशब्दोपलक्षितभूतोत्पन्नपदार्थानां, अभाव इति हेतोरिति। एतेनांडाभावः स्फुटितः। अंडात् बहिरावरणं पुराणप्रसिद्धमपि तदा नास्ति, आव्रियमाणाभावात्, तादृशस्य सर्वस्याभावे देशोपि नास्ति एवं कार्यक(का)रणसंघातवतोऽपि तत एवाभावे कस्य वा शर्मणे आवरणादिकं स्यादिति बोध्यते। अयं च प्रलयो जलमात्रावशेषरूपोऽपि नेति चरमभागार्थः" इति। नायं मन्त्रः अपां देवतानां अभिधावृत्त्या बोधकः। अपि तूक्तपूर्वावस्थाया एव॥

तथा द्वितीयो मन्त्रः—न मृत्युरमृतं तर्हि न। रात्रिया अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यं न (न्यन्न) परः किंच नास।" इति। अयमर्थः—"मरणं जीवनं च नासीत् प्राण्यभावात्। रात्रिगमको विधुरहर्गमको भानुर्वा न तदानीमासीत्। अपि तूपनिषत्प्रसिद्धमेकं ब्रह्मैव स्वाश्रितमायासहितं आसीत्, वातादेरप्यभावः। तस्मात् ब्रह्म(णो)भिन्नमुत्कृष्टं निकृष्टं वा नासीदिति।" अयमपि मंत्रो नापां वाचकः। अपि तु प्रलयावस्थाया एव॥

तथा तृतीयः—"तम आसीत्तमसा गूढमग्रे प्रकेतं। सलिलं सर्वमा इदं। तुच्छेनाभ्वपिहितं यदासीत्। तमसस्तन्महिनाजायतैकम्" इति। अयमर्थः—"यथा वर्षोपलाः जलान्न भिद्यन्ते, एवं परिदृश्यमानविकारजातं यदपेक्षया न भिद्यते तथा भूतविकारिभावरूपाज्ञानादिशब्दाभिधेयब्रह्मावा(व)रकतम एवासीत्। तच्च ज्ञाननिवर्त्यमिति तुच्छं इत्युच्यते। जगत् यत् तादृशतुच्छावृतमासीत्, तदेव महत्त्वेन अभिव्यक्तरूपेणोत्पन्नं"। इति। नायमपि मन्त्रोऽपां वाचकः। अपि तु अज्ञानदृष्ट्या जगदाकारेण भानं ज्ञानेनाज्ञाननिवृत्तौ शुद्धं ब्रह्मैवावतिष्ठते, इत्यर्थस्यैव बोधकः॥

एवं चतुर्थः—"कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविंदन्। हृदि प्रतीष्या कवयो मनीषा" इति। अयमर्थः—परब्रह्मसंबंधिमनःकार्यं प्रथमं सृष्ट्यादौ काम एव बहुतरोभूत्। स च कामः अभिव्यज्यमानस्य भूतभौतिकस्य सच्छब्दाभिधेयस्य असच्छब्दाभिधेये तमसि अव्यक्ते बंधनहेतुः। कामो ह्यज्ञाने सर्वं व्यवहारं बध्नाति। इमं चार्थं हृदि स्वबुद्ध्या विचार्य विद्वांसः निश्चितवन्तः" इति। संगृहीतश्चायमर्थो व्यासेन भगवता "कामबंधनमेवेदं नान्यदस्तीह बंधन"मिति। कुतस्त्यास्य पुनरपां बोधकता?॥

अथ पञ्चमः—"तिरश्चीनो विततो रश्मिरेषाम्, अधःस्विदासी३दुपरिस्विदासी३त्। रेतोधा आसन्महिमान आसन्। स्वधा अवस्तात् प्रयतिः परस्तात्" इति। अयमर्थः—भूतभौतिकानां मध्ये कश्चित् चैतन्यपदार्थः तिर्यक्दीर्घतंतुवत् व्याप्यावस्थितो भासते, एवमधः उपरि चावभासते, अतो न स्थानं नियन्तुं शक्यते। भौतिकाद्यर्थाः तादृशचैतन्यस्य सत्वरूपं रेतःशब्दवाच्यं सारं दधति, सन्निति प्रत्येति यतोर्थं सर्वो लोकः। ते चार्थाः गिरिनद्यादिरूपेण महान्तः। ईदृशभूत-

भौतिकोत्पत्तौ ब्रह्माश्रिता माया निकृष्टं कारणं। प्रयतिशब्दार्थभूतः परमात्मा उत्कृष्टं कारणं। प्रकृतिपुरुषौ जगत्कारणमिति संपिंडितोर्थः"। इति। नैवात्रापि अपां बोधः॥

अथ षष्ठः—"को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनाय। अथा को वेद यत आबभूव" इति। अयमर्थः "विविधसृष्टिः कुत उपादानात् कुतो वा निमित्तात् जातेति कोवात्र साक्षाद्वेद। देवा अपि नात्र प्रभवन्ति, यतस्ते तादृक्सृष्टेरर्वागेव विद्यन्ते। कुतस्त्या पुनरन्यस्यात्र प्रसक्तिरिति"। नात्रापां प्रतीतिः॥

अथ सप्तमः—"इयं विसृष्टिर्यत आबभूव। यदि वा दधे यदि वा न। यो अस्याध्यक्षः परमे व्योमन्। सो अंग वेद यदि वा न वेद।" इति। अयमर्थः—"जगदुपादानकारणं किंचिद्रूपमास्थाय वर्तते उताहो नेति इमं निर्णयं जगदीश्वरो वेद, अथवा सोपि न वेद। इह व्यावहारिकदृष्ट्या वेदनं पारमार्थिकदृष्ट्या चावेदनं बोध्यम्। सर्वथात्रापि नापां वादः इति॥

अथाष्टमः—"किं स्विद्वनं क उ स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तत्"। (यदध्यातिष्ठद्भुवनानि धारयन्) इति। अयमर्थः—अहो विद्वांसः अर्थद्वयं मनसा विचार्य आचार्यसकाशे पृच्छत—"गृहं निर्मातेव द्युपृथिवीलोकानिर्मातारः कस्माद्वनात् कं वा वृक्षं उपादाय तौ लोकौ निर्मितवन्त? इति, तथा यत् जगत्कारणं वस्तु निखिलभुवनं स्वात्मनि धारयत् नियमयत् वर्तते, तदपि किमिति" च अत्रापि नापां प्रसंगः॥

अथ नवमः—"ब्रह्मवनं ब्रह्म स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठत् भुवनानि धारयन्।"—अयमर्थः—सर्वशक्ति ब्रह्मैवेति आचार्यः

मनसा विचार्य वदतीति। नात्रापि लेशतोप्यपां प्रसक्तिः। सोपाधकद्वारा निरुपाधिकब्रह्मपरा इमे मन्त्रा इति तु सुस्पष्टं प्रतीमः। "अविष्टका सूर्यपरमन्त्रेण स्तूयते" इति भाष्यकारोक्तरीत्या ब्रह्मपरा मन्त्रा अपां स्तावकत्वेन महर्षिणा कल्पसूत्रकारेण विनियुक्ता इत्येव वक्तुं युक्तम्। अत एव श्रीमच्छंकरभगवत्पादाचार्याः भगवद्गीता-भाष्ये नवमाध्याये दशमश्लोके "उदासीनवदासनं जगत्सर्जनं च विरुद्धं भगवदुक्त"मिति शंकापनोदाय प्रवृत्त—

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते॥

इति श्लोके दृशिमात्ररूपस्य ब्रह्मणः सान्निध्यनिमित्तकं मायाकृतं सर्जन-मिति तात्पर्यतः समाधाय प्रकृतानेव मन्त्रान् ब्रह्मपरान् सिद्धवत्कृत्य प्रकरणार्थसम्मत्यर्थमुदाहरन्। एवमन्येपि मन्त्रा अन्यार्थे विनियुक्ताः शक्यार्थपराः संप्रदायविद्भिरंगीकृता विस्तरभिया नोदाह्रियन्ते॥

भल्लूककापालिकयोः, जंबुकक्षपणकयोः, शाक्तेयजम्बुकयोः, जम्बुकचार्वाकयोः, भल्लूकदिगंबरयोः, वैदेशिकविटयोश्च, परस्परविवादवर्णनम्। मध्याह्नवर्णनम्। पिचण्डिलकुकुरीसंवादः। कुक्षिंभरस्य कामकलिकाप्राप्तिवर्णनमित्यादीनि वर्णितानि॥

## No. 99 (1420)

### जनकजानन्दनाटकम्

### Janakajananda Natakam

Author—Kalyanarasimha.
Substance—Palm-leaf.
Size—16 × $1\frac{3}{4}$ inches.
Character—Andhra.
Folios—35.
Lines on a page—8.
Letters in a line—64.
Age of MS—Old.
Condition of MS—Not good
Correct or incorrect—correct.
Complete or incomplete—complete.

उपक्रमः—

श्रीरामाय नमः

विष्णोश्चापरथांगशङ्खजलजभ्राजोभुजानिंदिरा
स्वभ्रूश्रोणिशिरोधिपाणिविमतस्नेहान्वितान्मन्वती।
गाढाश्लेषमिषाद्नङ्गसमरे मृष्ना (ति) याभ्यां मुहुः
ताभ्यां नश्शुभसन्ततिं वितरतु द्वाभ्यां भुजाभ्यामपि॥

किंच—

स्वपितृविहितप्रेयो मिथ्यापवादनिमित्ततः।
सपदि विगळत्तत्सान्निध्यासती च तपस्विनी॥
रचितजगतीरक्षादीक्षं पुनः प(त)तिमयुषी।
गणपतिगुहक्रीडाहृष्टा जयत्यचलात्मजा॥

नान्द्यन्ते सूत्रधारः॥

या सूते यौगपद्येन प्रबोधविभवावुभौ।
सा नाट्यविद्या विमला जयत्वाचन्द्रतारकम्॥

इति पुष्पांजलिं विकीर्य॥

चिरादिव परिपूर्णं मन्ये मदीयमनोरथं यदत्र भवता गुरुणा वर्णकाचार्येण सादरमुपनीयादिष्टोऽस्मि, वत्स, भरतकलादर्शो निरवधिकास्मत्प्रेमरस प्रसरणसेतोर्जगदभिरामस्य नृपतेरभिरामस्य सभामपगम्य तदभि

मतं किमपि रूपकमभिरूपं निरूपयता भवतास्मन्मुखतश्चिरकालाभ्यस्तां नाट्यविद्यां सफलयता भवितव्यमिति। (पञ्चषाणि पदानि गत्वा पुरोऽवलोक्य, सानन्दं) कथमहो .... शिखं शिखाशेखरस्य हिरण्यासुरवक्षःपीठविपाटनपटुनखराशिखरस्य भक्तानुग्रहपरिग्राहितविश्वमंगळविग्रहस्य भगवतो लक्ष्मीनृसिंहस्य वासंतमहोत्सवाकलनकृतोत्साहोपेता एव सभास्ताराः ॥

उपसंहारः—

अघमर्षणः ....... पुरोऽवलोक्य।

ध्वनद्गुणधनुर्धरैर्भ्रमितपट्टसक्षेपिणी
गदापरिघतोमरद्रुघणभिंडिवाळासिभिः।
करोद्यतगिरिद्रुमैः प्रविकटाट्टहासोद्भटैः
नरासुरवलीमुखैर्निबिडमद्य भूमण्डलम् ॥

नूनमिदानीं तदीयस्सैन्यसम्मर्देन।

फणत्रुटनवित्रसद्भुजगभोगचक्रच्युत
प्रणोदनसमुद्भवत्कठिनपृष्ठगर्तावळिः।
सकच्छपकुलेश्वर(रः)सरयकुञ्चितांगभ(गोद्भः)टः
कथंचिदपि दुर्भरां सपदि बर्भरि(रीति)क्षितिम् ॥

सख्यौ—हळा जाणई लोकेक्कणअणजम्मफळं होदिअभाअहअराशी अदिसिळाहणिज्जमहाभुदगुणरंणगणण्णवो रामभद्दो इदो एव्व अहिवट्टइ ॥ अह्मे णवमारिआकुञ्जमधिट्ठि अनपिस्संभं पेखामो ॥

[छाया—हळा जानकी(कि)लोकैकनयनजन्मफलं भवदीयभागधेयराशिरतिश्लाघनीयमहाद्भुतगुणरत्नगणार्णवो रामभद्रः इत एवाभिवर्तते। अहो नवमालिकाकुंजमधिष्ठाय सविस्रंभं पश्यामः ॥]

प्रियंवदा—अंब मदी अ सहीकरकिसळअ चिरपरिपूजिवे सव्वमङ्गळेता ए पिअ दुमसंदणसुहं चिरकाळोवळद्धं थिरीकरेहि ॥

[छाया—अम्ब मदीयसखीकरकिसलयपरिपूजिते सर्वमङ्गळे तस्याः प्रियतमदर्शनसुखं चिरकालोपलब्धं स्थिरीकुरु ॥]

(इति निष्क्रान्तास्सर्वे)

इति जनकजानन्दनाटके पञ्चमोऽकः.

स्वभान्वब्दे नभोमासि अष्टम्यां गुरुवासरे।
जनकजानन्दनामाख्यं नाटकं लिखितं मया ॥

प्रतिपाद्यविषयः—

अत्र सूत्रधारनटीसंवादः। ग्रंथकर्तुः प्रशंसावर्णनम्। नारद-पर्वतसंवादः। अश्वमेधयागार्थं श्रीरामचन्द्रेण अश्वविमोचनम्। कुशलवसंवादः। भरद्वाजकुशलवानां संवादः। लवेन अश्वबन्धनम्। चक्रवाळलवसंवादः। धूम्रमुखीशूर्पणखासंवादः। कुशलवप्रावाहणिकानां संवादः, ब्राह्मणकासरकयोः शत्रुघ्नलवयोश्च संवादः। लवणासुरशत्रुघ्न-संवादः, लवणासुरकुशलवयुद्धवर्णनं। लवयुद्धवर्णनं। शत्रुघ्नपराजयः। लवमूर्च्छावर्णनं। अघमर्षेण सीतासविधे लवमूर्च्छाविषयनिवेदनम्। सीतादुःखवर्णनं, सीताङ्गुलीयकेन लवोत्थानं। भरतागमनं। सीता-रामभद्रसमागमः। इत्यादीन्युपवर्णितानि ॥

## No. 100 (714)

## पल्लवशेखरभाणः

Pallavashekharabhana

Author—Anantacharya.
Substance—Palm-leaf.
Size—17 × $1\frac{1}{4}$ inches.
Character—Andhra.
Folios—31.
Lines on a page—5.
Letters in a line—64.

Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete.

उपक्रमः—

॥ श्रीमन्निगमान्त गुरुचरणांबुजाय नमः ॥

वंदारुजनमंदारमिंदुमंडलमध्यगम्।
कंदर्पजनकं वन्दे सुन्दरं सैन्धवाननम् ॥
नीळां वञ्चयितुं गृहीतरमणीवेषो मुदा माधवः
तस्याश्चित्रविलोकनैकमनसः पार्श्वे सहासंस्थितः।

मुग्धे कं वद पश्यसीह निशि मे स्वप्नेऽहरद्यो मनः
सोऽयं पार्श्वगतस्तवेति हसितां चुम्बन्हरिः पातु वः ॥

नान्द्यन्ते

सूत्रधारः—सफलमद्य संजातं मे जन्म। यतः इतोऽग्रत एव मांडव्यनगरसीमंतिनीनयनानन्दकन्दस्य माण्डव्यप्रमुखस्य मुनिप्रकांडकांडाभयप्रदानशौंडबाहुदंडस्य निन्दितकन्दर्पकोटिसौन्दर्यस्य सन्ततनिगमान्तचिन्तनीयानन्तप्रभावस्य दक्षिणदिगंगनासीमन्तमुक्तामणेः श्रीरंगनायकमणेः निखिलरसिकजनस्वान्तशशिकान्तनिशाकान्तायमानवसन्तसमयतन्तन्यमानसमुत्तुङ्गविहङ्गपुङ्गवमातंगतुरङ्गशताङ्गानन्तमहोत्सवसेवासमुत्सुकाः विविधदेशागताः सकलवेषभाषाविशेषपारीणाः काव्यालङ्कारविचारणविचक्षणाः भरतशास्त्रपारदृश्वानः गुणैकपक्षपातिनः सामाजिका विजयमंटपमलङ्कुर्वाणाः कमपि मिश्रभाणमवलोकयितुकामाः, स्वयमेव परिचरे चरन्तं मां सबहुमानमाह्वयन्ति। तदहमपि चिरकालगुरुपरिचर्याधीताभिनयप्रयोगेण सामाजिकमानसोल्लासमापाद्य निखिलगायककुलोत्तंसजेगीयमानां भरतविद्याप्रवीण इति शाश्वतीं कीर्तिं संपादयिष्यामि (इति परिक्रम्य)। (सभक्तिप्रकर्षं शिरस्यञ्जलिं विधाय) भो भो सभासदः भवदनुग्रहाकांक्षिणा दासेन कुशीलवेन क्रियते विनयपुरस्सरा वन्दनमाला। (आकाशे कर्णं दत्वा) किं ब्रूथ। किं ब्रूथ कुशली भव भरतविद्याप्रवीण साधु साधु।

उपसंहारः—

अयि प्रियतमे, यद्येवमभेदविवक्षा मयि भवत्यास्तर्हि। धन्योऽस्मि जन्म सफलं मम सुन्दरीयं रात्रिश्शुभा। वनमिदं रमणीयमद्य। यस्मान्मदंकमुपगम्य चिराय रागात्तोषं मदीयं हृदयं नितरामनैषीः। मरंदधारे किं ब्रवीषि। किं ते भूयः प्रियमुपहरामि। इति।

श्रीमांडव्यपुरस्थितांबुजदृशां नेत्रोत्पलेंदोरयं
संपूर्णस्तुरगोत्सवश्च ललितश्रीरंगनेतुः प्रियः।
लब्धेयं तरुणी मनीषितमभूत्सिद्धं तवैवोद्यमा-
देतस्मादधिकं किमस्ति भुवने कांक्ष्यं प्रियं मामकम् ॥

तथापीदमस्तु भरतवाक्यम्—

श्रीरङ्गराजकृपया धरणीसुराणां
नित्यं सुखं भवतु वर्षतु कालमेघः ॥
विश्वंभरा जयतु सस्यसमृद्धिपूर्ण(र्णा)
भाणश्चकास्तु मम सद्विदुषां समाजे ॥

सोऽनन्तदेशिकार्यो नत्वा हयवदनवेदचूडार्ये ।
विदुषां रसिकानामपि मोदायैनं विनिर्ममे भाणम् ॥

श्रीमद्धीमदनन्तदेशिककृतो भाण(णः स) मुल्लासितः
अलंकाराद्विरसैस्समग्रसुगुणस्सन्मानसोल्लासदः ।
आचन्द्रार्कमयं जयत्वतितरां लोकेषु रङ्गाधिप-
प्रीत्यै रञ्जकभावबंधमुखरस्सन्नायकोद्भासितः ॥

॥ श्रीरङ्गनाथपादुकाभ्यां नमः ॥

प्रतिपाद्यविषयः—

अत्र सूत्रधारप्रवेशः, सूत्रधारनटीसंभाषणम् । कविप्राशस्त्य वर्णनम् । वसन्तर्तुवर्णनम् । पल्लवशेखरेण मन्मथबाधानुभवः । प्रभात-वर्णनम् । सूर्योदयवर्णनम् । पल्लवशेखरसहचरेण कळानिधिना कांचित् स्त्रियमधिकृत्य भाषणम् । प्रियायाः चन्द्रिकायाः वर्णनम् । पल्लव-शेखरकळानिधिसंभाषणम् । कळानिधिकाळिंगसंभाषणम् । मंजु-भाषिणीपल्लवशेखरसंवादः । गणिकामन्दिरवर्णनम् । वेश्यानर्तनवर्ण-नम् । बालगणिकाचाटूक्तिः । चन्द्रचूडपल्लवशेखरयोः वेश्यानुराग-विषयकसंभाषणम् । पल्लवशेखरस्य मृगाक्षी, चंचलाक्षी, चकोराक्षी, कर्पूरमञ्जरी, चन्द्ररेखेत्यादिस्त्रीभिस्सह संवादः । उद्यानवर्णनम् । चन्द्रकलाचन्द्रचूडयोः क्रीडावर्णनम् । चंचरीकेण पल्लवशेखराय स्वानु-भूतकुसुमलतिकासंभोगवृत्तान्तनिवेदनम् । पल्लवशेखरेण चंचरीकाय चन्द्रकलिकायाः आत्मनश्च ये विषयाः संघटिताः तेषां विषयाणां निवेदनम् । वेश्यांगनालंकारवर्णनम् । श्रीरङ्गराजतुरङ्गोत्सववर्णनम् । मगधदेशकाश्मीरदेशस्त्रीणां वर्णनम् । चन्द्रकलिकापल्लवशेखरयो-र्मेळनम् । इत्यादीनि वर्णितानि ॥

## No. 101 (386).

## प्राभावतनाटकम्

## Prabhavata Natakam

Author—Raghunathasuri.
Substance—Palm-leaf.
Size—17×1¼ inches.
Character—Andhra.
Folios—63.
Lines on a page—7.
Letters in a line—72.

Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete.

उपक्रमः—

॥ श्री हयग्रीवाय नमः ॥

॥ निर्विघ्नमस्तु ॥

पायाद्दुश्शरणागतामरसभामान्यात्मवन्याघन
स्फीतप्रीतिकयोगिहंसकुमुदातन्द्रालुचन्द्रायितः।
मायामानुषनाटकाभिनयनाद्भुतारिजातोद्भृत
श्रीसुग्रीवविभीषणानुचरितस्सीतासमेतो विभुः ॥

अष्टापदनांदी

फलकलिखितरूपे भज्यमानेशचापे
दशरथसुतचित्रे दर्शिते केळिसख्या।
प्रमदविकसितं ह्रीकूणितं प्रेमलग्नं
कुतुकचपलमव्यात्क्षोणिकन्येक्षणं वः ॥

द्वादश

विशिखनखरश्रेण्या दृष्ट्वा विभोस्समरश्रिया
सुरुचितपदं विक्षुभ्यंत्या विखंडितयेव वः।
अमृतशिशिरैराश्लिष्यन्त्यावनीसुता(त) याङ्कैः
वितरतु गतच्छिद्रं भद्रं वपुः खरवैरिणः ॥

अष्टादश किंच—

गङ्गा यस्य गता मुदेऽन्वयवशं श्रीशंखचक्रस्फुरा
पारावारवरेण यस्य कलितो वध्वागमेऽध्वा महान्।

यस्य(श्च) श्रीपरितोषदत्तमकरोन्नामैकशेषं द्विषं
श्रीरामस्स समस्तचेतनमनस्सन्दीपनः पातु नः ॥

द्वाविंशतिः

नान्द्यन्ते

सूत्रधारः—प्राचीमालोक्य सहर्षम्।

अद्यालोकनपश्यतोहरतमोमूर्च्छालललोकत्रयी
दृष्टिव्युष्टिसमर्पणोदितकृपाकंप्रेण किं प्रेषितः।
कालेन स्वकरैः प्रसारिभिरसौ रुन्धन्नरन्ध्रं तमः
सच्चक्षूकुरुते जना(न्क)त्कमल(लि)नीकान्तो निशान्तोदितः ॥

तदिदानीमस्ताविककोकलोकशोकापनुदकामोत्सवरूपकपूर्वरङ्गनांदीकरकरांकुरं, सरसालापना बालमराळिका निवेद्यमानानिजागमनहर्षचटुलचटुलळिताळिकुलापलालितमलीकं पद्मिनीकान्तमुपतिष्ठे ॥

उपसंहारः—

कृष्णः—आगच्छन्तु। गत्वा व्योमयानेन गच्छामस्स्वर्गङ्गां प्राभातिकस्नानाय। भद्र प्रीतोऽस्मि तवापूर्वया नाट्यपञ्चिकया।

भद्रः—देव शृङ्गारकवाटोद्घाटनकुञ्चिकाञ्चितप्रपञ्चिकां भवदपत्यचरित्रपञ्चिकां मन्दमतयः परिभविष्यन्तीति समुद्विजते मे हृदयम् ॥

इन्द्रः—सहासम्।

शीतालुवातकिजनैर्निन्द्यामपि न चन्द्रिकाम्।
शारदोल्लासिकामिनां कामेनाञ्चति किं परे ॥

कृष्णः—भद्र मैवम्—

आस्वादयन्तस्सुधियस्सरसां सुकवेः कृतिम्।
न सुधां बहुमन्यन्ते वसुधांबरजं पयः ॥

भद्रः—अस्ति तर्हीदं प्राशस्तिकं भरतवाक्यम्—

भक्तिस्स्तान्मे भगवति हरौ भक्तिभाजां गुरूणां
पादाब्जेषु प्रतिपदमपि प्रैधतां प्रेजमाना।
त्यक्त्वासूयां सततमसतीमाद्रियन्तां कृतिर्मे(तिं मे)।
साध्वीं सभ्यास्सरसमनसां सन्तु तेषां शुभानि ॥

(इति निष्क्रान्तास्सर्वे)

॥ साङ्गनिर्वहस्सप्तमोङ्कः ॥

इति श्री कौशिकवंशावतंसनानातंत्राध्वन्यश्रीशैलनाथसूरिसूनोर्वशीकृतशब्दब्रह्मणः श्रीरघुनाथसूरेः कृतिषु प्राभावतं नाम रूपकं समाप्तम् ॥

वाग्देवतात्वमवबुद्ध्य बुधास्स्वकृत्यां
पश्यन्तु कृष्णदयिताः समुदाः कृतिं मे ।
दोषोद्वि(द्वि)भावधि(यि)षयाप्यथ मामिकां तां
श्वश्रूं जनीव चतुरां नहि साभियायात् ॥

प्रतिपाद्यविषयः—

अत्र, सूत्रधारप्रवेशः, सूत्रधारपारिपार्श्वकनटीनां च संवादः। भद्रनटानुचरसंभाषणम् । श्रीरामस्तुतिः । विदूषकप्रद्युम्नसंवादः । उद्यानवनस्थितजम्बूवृक्षवर्णनम् । गङ्गाप्रभावत्योः प्रद्युम्नविषयकसम्भाषणम् । प्रभावत्याः प्रद्युम्नविषये अनुरागवर्णनम् । निसुंभाय प्रभावतीप्रदानप्रयत्नः, तेन प्रभावत्याः व्यसनं । सखीभिः समाश्वासनम् । प्रभावतीं प्रति गङ्गया कामारामे विद्यमानकामप्रतिमां नमस्कुर्विति प्रेरणा। प्रभावत्या प्रतिमारूपस्य प्रद्युम्नस्य पूजाविधानम् । प्रभावतीप्रद्युम्नयोः संदर्शनम् । भद्रनटप्रद्युम्नादिभिः वज्रनाभसन्निधे रामायणनाटकाभिनयनम् । प्रभावतीकामाङ्गदयोर्भाषणम् । निसुंभाद्यसुरसंहारः । प्रभावतीप्रद्युम्नयोर्विवाहः इत्यादीनिवर्णितानि ॥

## No. 102 (301)

## महेन्द्रविजयडिमः

Mahendravijayadima

Author—Venkabhupa.
Substance—Palm-leaf.
Size—17 × 1¼ inches.
Character—Andhra.
Folios—13.
Lines on a page—8.
Letters in a line—88.
Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete—3 Manjaris.

उपक्रमः—

॥ श्रीगणेशशारदागुरुभ्यो नमः निर्विघ्नमस्तु ॥

श्रीरम्यावसथप्रदोऽपि करुणाधारोऽपि दूरीकृत-
क्रूरव्यापृतिरप्यरिद्विपघटीघारंपरीदारणे ।
वीरस्सिंह इवानुरूपरसभृद्धीरोद्धतश्चास यः
श्रीरामस्स भवत्वभव्यहरणे क्षेमोदयस्यूतये ॥

सुग्रीवाज्ञासमिद्धः क्षितिदयितवधूदुर्दशोद्भूतधूमः
प्रज्वालः पङ्क्तिकण्ठापवनघनलताकुञ्जपुञ्जोदरेषु ।
रक्षस्स्थानीयभस्मीकरणभृशलसल्लोलबालाग्निरूपः
प्रत्यूहव्यूहतूलं प्रदहतु हनुमत्प्रौढतेजोविशेषः ॥

॥ नान्द्यन्ते सूत्रधारः ॥

सभाभिमुखमञ्जलिं बद्ध्वा

समग्ररसमेदुरस्समुदयाळिसम्मोदनः
स एष कुसुमाञ्जलिः समवकीर्यते सांप्रतम् ।
भवद्भिरनुगृह्यतामयमपि प्रणामाञ्जलिः
शिखण्डकटमण्डनं शिरसि सन्ततं धार्यते ॥

इति पञ्चषाणि पदानि गत्वा । आकाशे कर्णं दत्वा । किं ब्रूथ ।

यत्रैवास्ति समस्तसंस्तुतिपदप्रोद्भासिनी पङ्करसा
यत्र प्रच्युतकैकिवृत्तघटना धीरोद्धतो यत्र राट् ।
यद्देवासुरयक्षराक्षसचमूसंघर्षणाद्यद्भुतं
तद्ब्रूयादधिदैकपदं डिमपदप्रख्यातकं रूपकम् ॥

इति सहर्षं । अनुगृहीतोऽस्मि रसिकपरिषदा । तथाहि—

यद्विद्यानिचयार्जनं यदपि वा साहित्यमत्यद्भुतं
यद्वा सत्कुलजन्म यच्चविबुधश्लाघ्योपशान्तिव्रतम् ।
तत्सर्वं सुकृतैकलभ्यमिदमप्याज्ञाम्रहं तु ब्रुवे
सत्यं धन्यतमत्वमस्य सरसस्थानस्थलीमाननैः ॥

नेपथ्याभिमुखो भूत्वा, मारिष, इतस्तावत् । प्रविश्य मारिषः भाव अयमस्मि सूत्रधारः ॥

उपसंहारः—

तदद्य किल मर्षतैवावलंबनीयं किल महाराजेन।

महेन्द्रः– यद्रोचते तत्रभवताम् ।

महर्षयः—किमादिष्टमाचार्येण । निश्शात्रवेन्धनतया स्वयमेवोपशाम्यति क्रोधज्योतिः। तथा हि—

पलायितास्संप्रति शात्रवा ये
प्रणष्टभद्राः पुरुषोत्तमेन।
प्रसादतस्तस्य विसारिकीर्तेः
प्रतापसंपत्सफलाभवत्त ॥

आंगिरः—अथ किम् । सर्वमपि पुरुषोत्तमसहायतायुजो महेन्द्रस्य सुघटितमेवम् । नेपथ्ये। प्रियं नः ।

महेन्द्रः—सर्वेषामपि सुराणामेतदातोदमेदुराणामुपन्यासः।

आंगिरः—भवतु किं ते भूयः प्रियमुपहरामि।

महेन्द्रः—

यत्सन्धिर्विजयद्रुमां यदपि वा मन्थस्सुधावारिधेः
यच्चात्यद्भुतवस्तुलाभसहितं पीयूषसंपादनम्।
यद्वैरिव्रजखंडनं यदपि वा साम्राज्यधौरन्धरी
तत्सर्वं मम लब्धमादरयुजा भावत्कलीलादृशा ॥

॥ तथापीदमस्तु भरतवाक्यम् ॥

नित्यं नृत्यतु सन्मुखाम्बुजवने साहित्यधौरन्धरी
यस्तत्पालयिता तदीयसदने लक्ष्मी(:)स्थिता(रा) वर्तताम्।
धारासारमुचस्सदा जलधराः संमोदमातन्वतां
एतल्लोकमपोढविप्लवदशाबाधापनोदोचितम् ॥

इति निष्क्रान्तास्सर्वे

यः श्रीरामपुरीविलासवसतिः श्रीरामलीलेक्षण
प्राप्ताखण्डितपाण्डितीविलसनषड्दर्शनीवल्लभः।
तस्येयं सुकवेः कृतिर्विजयतां श्रीवेङ्कयार्यस्य या
सद्यो जृंभितगुंभितप्रविलसन्मल्लीमतल्लीप्रिया ॥

॥ इति चतुर्थोऽङ्कः ॥

॥ महेन्द्रविजयो नाम डिमस्संपूर्णः ॥

प्रतिपाद्यविषयः—

अत्र सूत्रधारप्रवेशः, मारिषसूत्रधारयोस्संभाषणम्। नारदशिष्ययोस्संभाषणम्। इन्द्रमातल्योस्संवादः। इन्द्रांगिरसयोस्संभाषणम्। मुनिशिष्ययोश्शाकल्यमाण्डव्ययोस्संलापः। बलेस्समीपे अमृतप्राप्त्यर्थं देवैस्सह सन्धिः कार्य इति भार्गवप्रेरणम्। तदर्थमाङ्गिरसागमनम्। देवासुराणां सन्धिवर्णनम्। देवासुरैर्मिळित्वा अमृतप्राप्त्यर्थं क्षीरोदमथनप्रयत्नः, क्षीराब्धिमथनेन कालकूटैरावतकल्पवृक्षधन्वन्तरि लक्ष्मीचन्द्रामृतादीनामुद्भवः। सुधारसस्वीकारार्थं देवासुराणां कलहः। ततः विष्णुना मोहिनीरूपधारणम्। सुराणाममृतलाभः। देवासुराणां युद्धवर्णनम्। बलिमहेन्द्रयोर्युद्धवर्णनम्। बलेः पराभवः। इन्द्रस्य विजयप्राप्तिः। इत्यादीनि वर्णितानि॥

## No. 103 (1653)

## रुक्मिणीपरिणयम्

Rukminiparinayam

Author—Chakravartya Charya.
Substance—Palm-leaf.
Size—16 × 1½ inches.
Character—Grantha.
Folios—76.
Lines on a page—7.
Letters in a line—48.
Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete.

उपक्रमः—

श्रीमते हयग्रीवाय नमः

निर्विघ्नमस्तु

दंपत्योर्नवरत्नदर्पणकनत्कक्ष्यान्तरे मंटपे
लक्ष्मीकैटभवैरिणोः परिणये वेदिं शुभां जग्मुषोः।
एकैकत्र नवोन्मिषत्प्रातिमयोर्गाढांकपाळीसुखं
सव्रीळं सरसं तदानुभवतोर्मंदस्मितं पातु वः॥

एषा पूर्वरङ्गाङ्गभूताष्टदशपदा नान्दी। अस्यां लक्ष्मीनारायणयोर्विवाह-वर्णनया पाणिग्रहणमङ्गळप्रवृत्तस्य शृङ्गारिजनशिखामणेर्देवकीनन्दनस्य नायिकाप्राप्तिरर्थशक्त्या सूच्यते॥

नृत्यद्बाणासनिर्यच्छरनिकरदळद्वैरिकोटीरकोटी
भास्वन्माणिक्यमालारुचिररुचिचयोद्दीपिताशावकाशः।
संध्याकल्हारमल्लीमधुरसलहरीमाधुरीणां धुरीणां
वाणीं क्षोणीशमौळिर्जनयतु जवनाश्वानकीजानिरेषः॥

एषा च नान्दी पाणिग्रहणविरोधिसाल्वजरासन्धादिविजयमर्थशक्त्या सूचयति। नान्द्यन्ते सूत्रधारः। समन्तादवलोक्य, सकौतुकं। समन्तत-स्समाकलित एव रङ्गमङ्गळप्रसाद्धनाविधिः। तथा हि—

इतः खलु विपंचिका मुखरितध्वनि (रूप)स्तूयते
मृदङ्गनि(न)नादितो गगनवीधि(थि)का पूर्यते।
इतो विविधभूमिकापरिचयो जरीजृंभ्यते
समं परिकरैरितो नटजनो नरीनृत्यते।

एतद्रंगप्रधानम्। सविनयहर्षम्।

नमन्निगममण्डलीमणिकिरीटमुक्ताफल
ज्वलत्किरणसंहतिस्फुरणपुंडरीकायितः।
यदीयपदपल्लवस्समभुना यदूनां कुले
विराजितनराकृतिर्मुररिपुर्मुदे वोऽस्तु सः॥

समन्ततो विलोक्य, सकलजनमनोहरकुसुमसमुदयसमुल्लासि-तानि हरिदन्तराणि। यतः

उपसंहारः—

गर्गः—नयनानन्दन नन्दनन्दन अखिलभुवनजननहननावनलीलस्य, विमतजनविमथनकृते कृतावतारस्य, विनता(त)जनतासंरक्षणैकदी-क्षितस्य, निखिलजगतीनिदानस्य, सकलकर्मफलभूतस्य, सकल-चेतनाचेतनशरीरस्य, संसारपदवीजांघिकलोकविश्रमारामस्य-अर्थिजनकल्पकस्य भगवतो वासुदेवस्य। किं ते भूयः प्रियमुप-हरामि। [एष कार्यार्थोपसंहृतिरुपसंहारः]

कृष्णः—पुरोहितं गर्गमभिवाद्य। भगवन्, योगशास्त्रविशारदाना,

मनन्यप्रयोजनानां भवादृशानां परमभागवतानामभिधेयं किं नाम वर्तते। तथापीदमस्तु भरतवाक्यम् ॥

समुन्मीलन्मल्लि(ल्ली)कुसुमरससौगन्ध्यसहजा
कवेरेषा सूक्तिस्तुलितमणिमञ्जीरनिनदा।
प्रगल्भा सन्दर्भैर्जगति गमिता कीर्तिमतुलां
मुहुर्द्वि(र्वि)द्वत्स्तोमश्रवणपुटपेया विजयताम् ॥

अपिच—

वर्षन्तु काले नियतं पयोदाः
सर्वाणि सस्यानि फलन्तु कामम्।
गोब्राह्मणानां सुखमस्तु नित्यं
धर्मा भवेयुश्चिरमेधमानाः ॥

॥ एषा शुभशंसनरूपा प्रशस्तिः ॥

इति निष्क्रान्तास्सर्वे। रुक्मिणीपरिणयोनाम
पञ्चमोऽङ्कः॥

## सांगं नाटकमुदाहृतम्

प्रतिपाद्यविषयः—

अत्र सूत्रधारनटीसंवादः प्रभातसमयाविभावरीवर्णनम्। विधिविलासवर्णनम्। रुक्मिणे जरासन्धेन रुक्मिणी कृष्णाय न देया शिशुपालस्यैव देयेति कुसुमशेखरमुखेन पत्रप्रेषणम्। तथा रुक्मिणा जरासन्धाय रत्नकिरीटमुखेन पत्रप्रेषणम्। रत्नकिरीटकुसुमशेखरयोस्समागमः। उभयोस्संवादः। कपिंजलकांपिययोस्समागमः। भीष्ममहाराजस्यानुतापः। श्रीकृष्णवर्णनम्। भीष्मकेयूराङ्गदयोः संवादः। रुक्मिणीवर्णनम्। रुक्मिणीकृता मन्मथप्रार्थना। तथा चतुर्मुखं प्रति भिक्षां देहीत्यभ्यर्थना। रुक्मिणीप्रलापः। विरहव्यथाविष्टां रुक्मिणीं दृष्ट्वा सखीकृतानुतापः। रुक्मिण्या ब्राह्मणद्वारा श्रीकृष्णाय पत्रप्रेषणम्। समुद्रोद्यानवनद्वारकानगर्यादीनां वर्णनम्। ब्राह्मणकृतश्रीकृष्णस्तुतिः। कृष्णब्राह्मणसंवादः। विदर्भनगरं प्रति श्रीकृष्णागमनम्। उद्यानवर्णनम्। बलरामस्य सैनिकजनैस्साकं विदर्भनगरं प्रत्यागमनम्। रुक्मिणी शिशुपालस्यैव दातव्येति रुक्मिणः प्रतिज्ञा। जरासन्धसाल्वशिशुपालादीनां विदर्भनगरं प्रत्यागमनम्। अंबिकादर्शनार्थं, रुक्मिण्याः

देवालयगमनम्। मूर्धन्वत्सूर्यवर्चसोस्संवादः। श्रीकृष्णेन रुक्मिणी-हरणम्। यादवजरासन्धादीनां युद्धवर्णनम्। जरासन्धादीनां पराजयः। रुक्मिपराजयः। रुक्मिणीसहितेन श्रीकृष्णेन द्वारकानगरप्रवेशः। रुक्मिणीविवाहवर्णनम्.।. इत्यादयो वर्णिताः॥

## No. 104 (301)

## रुक्मिणीमाधवनामाङ्कः

Rukminimadhavanamanka

Author—Venkabhupa.
Substance—Palm-leaf.
Size—14×1¼ inches.
Character—Andhra.
Folios—5.
Lines on a page—8.
Letters in a line—88.
Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete.

उपक्रमः—

॥ श्रीगणाधिपतये नमः॥

॥ विघ्नरहितमस्तु॥

आनन्दैकरसाश्रयोऽपि विबुधैराराधितोऽप्यादरात्
आविर्भूततनुर्बभूव भुवनं पातु कृपातुन्दिलः।
योऽसावाचरयद्विडंबनमपि प्रायो मनुष्याकृतः
सोऽयं (ध्यान)ध्येयपदं भवत्वनुकलं सीतैकतानो विभुः॥

अपि च—

योऽदत्त प्रणतिं समस्तविभवे रामाय बद्धांजलिः
सीतायै मणिमुद्रिकामप(पि)यशस्सेतुं कपीनामपि॥
रक्षोराजमुखे चपेटमपि यः श्रेयस्त्रिलोक्या(क्याः)सदा-
प्यक्षीणश्रियमातनोतु हनुमानक्षादिशिक्षाचणः॥

नांद्यन्ते सूत्रधारः। अंजलिं बध्वा।

कुशलितसभास्ताराणां कुड्मलितकरांबुजः कृपां याचे।
फलमामनन्ति रसिकाः प्राक्तनसुकृतोत्करस्य यामेव॥

निपुणं निर्वर्ण्य। अहो किल सकललोकाभिनन्द्यसमंजसयशो-मतल्लिकानिकायसमाक्रांतजगदुपन्नपादस्य पदपद्माराधकस्वकनिकुरुंब संभरणदीक्षाधृतकरप्रतिसरस्य शरस्यदपवर्जनिरस्तसमस्तप(र)क्षस्तति प्रतीति(त)तूलजालस्य निरालस्यपरित्रातशरणागतरावणानु(ज)जन्मनो मनोजतातदशायाथातथ्यनिरूपणरमानुरूपसंपदुदयस्य सदयावलोक-समाटंकसुधाप्रसारनिरस्तसुग्रीवमुखावग्रहस्य सर(ह)स्याम्नायाम्नातम-हिम्नः श्रीरामनगरधाम्नः श्रीरामनाम्नः परब्रह्मणः प्रवर्तमानप्रसूनसमयम-होत्सवदिदृक्षाकौतूहलतरंगितहृदः सहृदयाह्लादलहरीपरिपोषणनिर्दूषण-सकलकलाकलापोपलंभसंभृतमुदः शुभरतभरतमतानुसारिविसारी(रि) भरतविद्यानवद्यकाश्चनविवेचनानिकषायमाणमनीषासंपदस्सत्रे सभासदः। तदेनामनुसृत्य तन्मनानुरूपकाभिनयेन परितोषयिष्यामीति परिक्रम्य। आकाशे कर्णं दत्वा किं ब्रूथ —

उपसंहारः—

ततः प्रविशति सब्राह्मणो माधवो रुक्मिणी सखी च।

माधवः—ब्रह्मन् सफलोऽस्मन्मनोरथः सहायेनात्रभवता। तत्पादवन्द-नाय पित्रोरुपकण्ठं गच्छामः।

ब्राह्मणः—रिपुबलजलधिमित्यादि पुनः पठति।

रुक्मिणी—शृङ्गारलज्जां निरूपयति। सखी। हळा संभावेहिं पिय-संसणदं बह्मणं। [छाया—हळा संभावय प्रियशंसनधन्यं ब्राह्मणम्]

रुक्मिणी—मुक्ताहारं ददाति।

ब्राह्मणः—गृहीत्वा सहर्षम्। माधवं प्रति किं ते भयः प्रियमुपहरामि।

माधवः—समासादितमेव सर्वमाशास्यमत्र भवत्साह्यन॥

अन्योन्यसंदेशनिवेशनेन
धन्योऽस्मि मान्योऽपि च पूर्वमेव।
वैवाहिकं कर्तुमिहोपयातः
को वा त्वदन्योऽस्ति कृपावदान्यः॥

तथापीदमस्तु भरतवाक्यम्।

भवत्व(दुर्भि)भिक्षपदं धरित्री
भजन्तु नाथं विबुधा रसज्ञम्।
अचंचला नित्यकला समृद्धिः
जयत्वपारोत्सवसंप्रसारः॥

प्रतिपाद्यविषयः—

अत्र सूत्रधारनटीसंवादः। रुक्मिणीमधिकृत्य दारुकमाधव-संवादः। श्रीकृष्णं प्रति वैदर्भदेशीयब्राह्मणागमनम्। ब्राह्मणेन पत्रिका समर्पणम्। श्रीकृष्णेन पत्रिकावाचनम्। दारुकसहितेन श्रीकृष्णेन भीष्मपुरीगमनम्। तत्रोद्याने श्रमपरिहारः। उद्यानवनवर्णनम्। रुक्मिणीहरणम्। श्रीकृष्णशिशुपालयोर्युद्धवर्णनम्। शिशुपाल-पलायनम्। रुक्मिणीमाधवयोर्विवाहः। इत्यादीनि वर्णितानि॥

## No. 105 (301)

## लक्ष्मीस्वयंवरसमवाकाररूपकम्

Lakshmisvayamvarasamavakararupakam

Author—Pradhana venkamatya.
Substance—Palm-leaf.
Size—17 × $1\frac{1}{4}$ inches.
Character—Andhra.
Folios—42-51.
Lines on a page—8.
Letters in a line—88.
Age of MS—Old.
Condition of MS—Good.
Correct or incorrect—Correct.
Complete or incomplete—Complete.

उपक्रमः—

॥ श्रीहयवदनाय नमः ॥

॥ निर्विघ्नमस्तु ॥

जयतु जनककन्याधन्यवक्षोजकुंभ-
द्वयमृगमदरेखाकल्पनाशिल्पशौंडः।
जननयनचकोरीजालचन्द्रातपश्रीः
अखिलरिपुनिहंता कोऽपि चापी सकांडः।

नांद्यन्ते

सूत्रधारः। पुरोऽवलोक्य। सभामभिमुखं अंजलिं बध्वा।
इयमियं कुसुमाञ्जलिरञ्जसा
पदयुगं प्रति भावुकसंततेः।
भवतु येन महाकविभारती-
निचयसाम्यमधारि मधुद्रवैः॥

### नष्टलाभकालः

अथ नष्टलाभकालस्तत्काले शीतदीधितिर्यस्मिन् ।
राशौ स्थितः स तस्माद्यावद्भिर्वासरैर्व्रजेल्लग्नम् ॥ ६७ ॥
प्रश्नोत्थं तावद्भिर्दिवसैर्नष्टं प्रलभ्यते नूनम् ।

### अत्र मतान्तरम्

ऊचुः केचन हिमगुर्यत्रांशे तस्य यावता नाथः ॥ ६८ ॥
कालेन लग्नमीयाल्लभ्यं स्यात्तावता नष्टम् ।

### यामचक्रान्नष्टदिग्विवरणम्

यावन्तः प्रविभागाः सार्धद्विघटीमिता रवेरुदयात् ॥ ६९ ॥
प्रश्नजघटिका यावत्तावन्तो धीमता वृषाद्गण्याः ।
तस्माज्जातं लग्नं त्वारूढाह्वं बुधैरुक्तम् ॥ ७० ॥
तत्स्थस्तन्नाथो वा यत्रास्ते यामचक्रतः ककुभि ।
तत्रास्ते नष्टमिति प्रश्नमहातन्त्रमाचष्टे ॥ ७१ ॥
इति शेषसूरिणासावारूढाह्वस्तृतीयोऽत्र ।
सप्तत्या भूयुतया हृद्यैः पद्यैर्विनिर्मितः काण्डः ॥

इति प्रश्नमालायां तृतीय आरूढकाण्डः

## अथ चतुर्थो धातुकाण्डः

### धातुमूलजीवा राशयो ग्रहाश्च

विबुधैः कथिताः क्रमशो मेषाद्या धातुमूलजीवाह्वाः ।
विधुकुजसौरिभुजङ्गा धात्वाह्वा रविभृगू तु मूलाख्यौ ॥ १ ॥
जीवाभिधौ बुधगुरू किन्तु विशेषोऽत्र जिज्ञास्यः ।
स्वर्क्षेष्वर्केन्दुविदो धात्वाह्वाः स्वर्क्षगः शनिर्मूलम् ॥ २ ॥
मूले परभेऽर्काब्जौ जीवकधातू परर्क्षगौ ज्ञशनी ।

### ग्रहाणां लोहवर्गः

रीतिः कांस्यं ताम्रं त्रपु च सुवर्णं च रौप्यमयः ॥ ३ ॥

अथ इति सूर्यादीनां लोहाः किन्त्वत्र चिन्त्यमिदम् ।
खेटाः स्वर्क्षगताश्चेल्लोहाः स्वस्वाः समुन्नेयाः ॥ ४ ॥
अन्यर्क्षगा यदि तदा स्वस्वैर्लोहैर्विमिश्रवस्तूनि ।
परगृहगाणां मध्ये यो बलवांस्तस्य लोहेन ॥ ५ ॥
प्रायो मिश्रं शिष्टग्रहलोहैर्मिश्रितं मनाक्च स्यात् ।
निजगृहगस्य द्युसदः परैर्युतौ स्वस्य लोहेन ॥ ६ ॥
बहुमिश्रमन्यदिविषल्लोहैरल्पं विमिश्रं च ।
तदनूपलमणिधरणीभूषणवर्गान्नभस्सदां स्पष्टम् ॥ ७ ॥
वक्ष्ये विशिष्य कोशान्तरगतपाठानुरोधेन ।

## ग्रहाणां पाषाणवर्गः

तत्रादावुपलगणाः कथ्यन्ते भास्वतस्तु रविकान्तः ॥ ८ ॥
शशिनो विधुकान्तः स्यादन्येषां स्वस्वरत्नसमदृषदः ।
खेटा निजर्क्षगाश्चेदुपलाः स्वस्वाः परर्क्षगा यदि ते ॥ ९ ॥
राशिग्रहवीर्यवशात्तत्समवर्णोपला वाच्याः ।
बलसाम्ये गृहखगयोस्तद्वर्णाभ्यां भृशं विमिश्रोऽश्मा ॥ १० ॥
उभयोर्बलराहित्ये तद्वर्णाभ्यां मनाग्विमिश्रोऽश्मा
युक्तिरियं मणिवर्गे भूवर्गे च प्रचिन्त्यतां सुधिया ॥ ११ ॥

## ग्रहाणां रत्नवर्गः

अर्कादीनामाहुर्मणिमुक्ताविद्रुमाणि गारुडकम् ।
अथ पुष्यरागवज्रं नीलं गोमेदवैडूर्ये ॥ १२ ॥

## ग्रहाणां भूवर्गः

अर्यम्णो ग्रावमयी हिमरश्मेस्तूषरा प्रवालाभा ।
भौमस्य मृन्मयी शशिसूनोः सूरेर्मनश्शिलासदृशी ॥ १३ ॥
मुक्तास्फटिकसमा वा सितस्य तत्खनिरयस्समा यद्वा ।
तत्खनिरार्केर्भूरिति भूवर्गः प्राक्तनैरुक्तः ॥ १४ ॥

## ग्रहाणां भूषणवर्गः

उदितो नृगृहे नृखगैर्युक्तदृष्टेऽथवा भूषा

मर्त्यस्य पशुविहङ्गमलग्ने तत्तत्खगैर्युते दृष्टे ॥ १५ ॥
तत्तत्समुचितभूषा इति निश्शङ्कं सुधीर्ब्रूयात् ।
कण्ठविभूषणमर्यमकुजसूरीणां त्रिधुज्ञयोर्भूषाम् ॥ १६ ॥
श्रोत्रस्य शिरोभूषां भृगोस्तु फणिमन्दयोः पदे च करे ।
धार्यां क्रमेण भूषां चाहुर्विबुधाः पुनश्चान्याः ॥ १७ ॥
भूषा वदन्ति तरणेर्माणिक्यविभूषणं सुधारश्मेः ।
साक्षरनिष्ककृतां वा मालां मुक्तामयीं कुभुवः ॥ १८ ॥
विद्रुममालां गारुडमणिमालां ज्ञस्य देवगुरोः ।
भूषां रत्नैः खचितां भृगोस्तु वैडूर्यमौक्तिकाभरणम् ॥ १९ ॥
दान्तं नाखरमायसमार्केश्चेत्थं विशेषोऽथ ।
तमसा सहिते ब्रूयाद्गलसूत्रं गीष्पतौ युते भृगुणा ॥ २० ॥
मुक्तास्फटिकाभरणं सेन्दावर्जुनशलाटुसदृशं स्यात् ।
धार्यं सदा विभूषणमिज्ये युक्ते खगेन केनापि ॥ २१ ॥
खेटैर्मिथः समेतैर्गुरुवर्जं जातुचिद्धार्यम् ॥ २२ ॥
इति धातुकाण्ड उक्तः पद्यैः सार्धैकविंशत्या ।
शेषसुधिया तुरीयः प्रश्नविदा प्रश्नमालायाम् ॥

इति प्रश्नमालायां चतुर्थो धातुकाण्डः

## अथ पञ्चमो मूलकाण्डः

कथ्यन्ते प्राचीनैः शास्त्रैरिह मूलचिन्तास्तु ।
क्षुद्रं सस्यमजाल्योर्लतास्तुलावृषभकर्किणामुक्ताः ॥ १ ॥
तरवो हरिकार्मुकयोर्गुल्मो युगयोषितोरुक्तः ।
इक्षुर्झषस्य कण्टकतरवो घटनक्रयोरुक्ताः ॥ २ ॥
पापशुभर्क्षाणां स्युः कण्टकिनिष्कण्टकद्रुमाः क्रमशः ।
तरणेर्द्रुमाः क्षुपा वा गिरिजा वा युग्मकण्टका वा स्युः ॥ ३ ॥
कदली वल्लीरिन्दोः कुजस्य लघुकण्टकः शाखी ।
क्षुद्रं सस्यं वा स्याच्चान्द्रेर्गुल्माः क्षुपा वृक्षाः ॥ ४ ॥

वल्लीतुल्या वा स्युः सूरेरिक्षुर्हि नारिकेलो वा ।
काव्यस्य व्रीहिभवं सस्यं वा पृथुलपर्णवृक्षा वा ॥ ५ ॥
चिञ्चाद्रुमाः शनैश्चरराह्वोः स्युर्वक्रकण्टकास्तरवः ।
यद्वा तालास्तेषां वृक्षविशेषा मुहुर्बोध्याः ॥ ६ ॥
अर्केन्दुरविसुतानां निस्साराः काव्यजीवयोस्तरवः ।
अन्तस्साराः सुधिया ज्ञेयः कश्चिद्विशेषोऽत्र ॥ ७ ॥
स्वगृहेष्वेषु खेगेषु स्थितेषु वाच्या द्रुमा बहिस्साराः ।
परगृहगेष्वेषु वदेदन्तस्सारांस्तु निश्शङ्कम् ॥ ८ ॥
अन्तस्साराः स्वर्क्षेष्वारैन्दवपन्नगेषु विज्ञेयाः ।
तेष्वन्यगृहगतेषु च चिन्त्या वृक्षा बहिस्साराः ॥ ९ ॥
स्वर्क्षेष्वर्कादीनां विबुधास्त्वक्कन्दपुष्पपर्णानि ।
फलमतिपर्चेलिमफलं मूलं वल्लीं च संजगदुः ॥ १० ॥

ग्रहाणां धान्यानि

गोधूमतण्डुलाढकमुद्गांश्चणकांस्ततश्च निष्पावान् ।
तिलमाषकुलुत्थांश्च क्रमाद्वदेदर्यमादीनाम् ॥ ११ ॥

अत्र मतान्तरम्

रव्यादीनामपरे निष्पावमथो तिलांश्चणकान् ।
मुद्गारुणशुक्लाढकमापान्माषांश्च संजगदुः ॥ १२ ॥
व्रीहिः शशिजस्य धराभवः प्रियङ्गुश्चानिर्दिष्टः ।
निजनिजवर्णानुगुणं धान्यं चोह्यं धिया सुसदाम् ॥ १३ ॥

ग्रहाणां तत्तत्स्थलजा मूलिकाः

ऊषरभुवि रविकुजयोर्वल्मीके चान्द्रिभोगिनोः सलिले ।
विधुभृग्वोः शैलतटे गुरोस्तु नीलोपलस्थले च शनेः ॥ १४ ॥
कथयेत्क्रमात्प्ररूढाः सुधीरिदं मूलिका ज्ञात्वा ॥
इति मूलाभिधकाण्डः प्रोक्तः शेषेण पञ्चमो हृद्यैः ।
सार्धचतुर्दशपद्यैः प्रश्नविदा प्रश्नमालायाम् ॥

इति प्रश्नमालायां पञ्चमो मूलकाण्डः

# अथ षष्ठो जीवकाण्डः

जगतां मातापितराविन्द्वर्कौ सलिलतेजसोश्च पती ।
अथ विद्वद्भिः कथिता गुरुसितकुजचान्द्रिरविपुत्राः ॥ १ ॥
नाथाः क्रमान्महीजलतेजोमरुदम्बराणां च ।
नासारसनानयनत्वक्श्रुतिनाम्नां हृषीकाणाम् ॥ २ ॥
विषयाणामपि परिमलरसरूपस्पर्शशब्दानाम् ।
तदनु क्रमशो वेद्या गुणनेत्रशराब्धिभूमिताभिश्च ॥ ३ ॥
विषयजधीभिः सहिताः कुसुनादीनां स्मृता वर्गाः ।
स्पर्शरसरूपयुक्ता मत्कुणशिथिलीपिपीलिकायूकाः ॥ ४ ॥
दंशाश्च भूसुतस्य स्पर्शरसाढ्या निजाकरोपगताः ।
शुक्तिवराटकशङ्खा ज्ञस्य सुरा मानवा द्विजा भुजगाः ॥ ५ ॥
शब्दादिपञ्चकयुताः पशवश्च गुरोर्विनिर्दिष्टाः ।
स्पर्शरसरूपगन्धैर्युक्ता भृङ्गादयो भृगोरुक्ताः ॥ ६ ॥
स्पर्शसमेतास्तरवः प्रकीर्तिताः सद्भिरर्कभुवः ।
द्विचतुर्बहुपदजानुगविहगाविवादाः शरीरिणः षड्धा ॥ ७ ॥
मत्कुणयूकप्रमुखा बहुपादाः सरटगोधिकाद्यास्तु ।
जानुचराः पदहीनाः शम्बुकशुक्त्यादिकाः परिज्ञेयाः ॥ ८ ॥
द्विपदचतुष्पदबहुपदविहगाभिख्येषु भवनेषु ।
युक्तेक्षितेषु तत्तत्खेटैस्तत्तच्छरीरिणश्चिन्त्याः ॥ ९ ॥
वक्ष्यामि विहगचिन्तां लग्नगयोर्मकरमीनयोर्युतयोः
ईक्षितयोर्वा रविणा ताक्ष्यः शशिना शिखी कुजार्किभ्याम् ॥ १० ॥
कुक्कुटकाकौ तु विदा कुक्कुटकीरौ बकः सुरेज्येन ।
भृगुणा घूकस्तमसा भारद्वाजश्च विज्ञेयः ॥ ११ ॥
मृगमीनेतरराशिषु तनुषु द्विजखेटयुक्तदृष्टेषु ।
तत्तद्राशिसवर्णा विहगास्तनुभूतमकरमीनभयोः ॥ १२ ॥
विहगान्यखगैः क्रूरैः सौम्यैर्युतयोः क्रमेण वीक्षितयोः ।
ज्ञेयाः क्रूराः सौम्याः पतत्रिणो धीमता स्पष्टम् ॥ १३ ॥
स्वस्वोच्चगोदयगतेष्वर्कादिषु मर्त्यचिन्ता स्यात् ।

तुङ्गे स्वर्क्षे सखिभे परभे च युतेऽथवा दृष्टे ॥ १४ ॥
रविणा नृपस्तदाश्रितजनो भटो दुर्जनश्च स्यात् ।
तुङ्गे शशिना युक्ते दृष्टे वा शङ्खशिल्पज्ञः ॥ १५ ॥
स्वर्क्षे भिषङ्नटो वा दैवज्ञो मित्रभे सुधाकारः ।
अन्यगृहे चर्मकरो युतेषु दृष्टेषु वा तदृक्षेषु ॥ १६ ॥
भौमेन कांस्यकारः कुलालको विक्रयी च शिल्पी स्यात् ।
तुङ्गे विदा युते वा दृष्टे योगी स्वभे नटश्चोरः ॥ १७ ॥
गणिका वा मित्रर्क्षे योगाध्येता परत्र योगीष्टः ।
तुङ्गे गुरुणा युक्ते दृष्टे वा वेदशास्त्रज्ञः ॥ १८ ॥
स्वर्क्षे तर्कज्ञो वा वाग्मी सखिभे तु याचको विप्रः ।
परभे जातिविहीनो विप्रः सुधिया समुन्नेयः ॥ १९ ॥
तुङ्गे भृगुणा युक्ते दृष्टे वा ग्रामपोऽथवा शूद्रः ।
स्वर्क्षे तु तन्तुवायो यद्वा मुक्तावणिक् सुहृद्राशौ ॥ २० ॥
नापितशूद्रौ परभे ज्ञेयः शूद्रो निहीनतमः ।
तुङ्गे शनिना युक्ते दृष्टे वा संकराद्भवः स्वर्क्षे ॥ २१ ॥
तरुविच्छेत्ता सखिभे परत्र भवनेऽपि मांसभुक् ज्ञेयः ।
स्वर्क्षेऽहिना युते वा दृष्टे विपदो गृहेषु शिष्टेषु ॥ २२ ॥
फणिनो रविजोक्तफलं वाच्यमिति प्राहुराचार्याः ।
अथ मानुषचिन्तायामयमप्यंशो हि धीमता ज्ञेयः ॥ २३ ॥
रविशशिगुरुभृगुषु तनौ मेषेऽशुक विक्रयी वणिग्वा स्यात् ।
विदि लग्नेऽजे गायकनटावजे सूर्यजे तनौ रुग्णः ॥ २४ ॥
मन्दे सिंहे लग्ने वैरी जूकालिलग्नगे घटकृत् ।
फलमिदमूह्यं द्युसदामेषामवलोकनेनापि ॥ २५ ॥
अत्र ग्रन्थान्तरतोऽप्ययमर्थो धीमता वेद्यः ।
तनुभूतोच्चादिवशाद्द्र्व्यादीनां फलं ब्रवीति जिनः ॥ २६ ॥
तुङ्गे स्वभे सुहृद्भे रिपुनीचभयोश्च भास्करे चिन्त्यः ।
भूपः सेनाधीशो भूपतिभृत्यः पदातिश्च ॥ २७ ॥
तेषु विधावुपसूतिर्नटी च मौहूर्तिको वधूर्दुष्टा ।
तद्भेषु कुजे शिल्पी घटकारस्तैलिकश्च चित्रकरः ॥ २८ ॥

तद्भवनेषु बुधे सति वैश्यो विबुधो वणिक् क्रमाच्चारः।
तेषु गुरौ द्विजपुङ्गवमान्त्रिकजिनवैश्यबालाः स्युः ॥ २९ ॥
तेषु भृगौ वल्लालो गोपालो विक्रयी च गणिकाजः।
उक्तेषु भेषु मन्दे निहीनशूद्रोऽथ चण्डालः ॥ ३० ॥
अतिगर्हितचण्डालश्चार्वाकश्च क्रमाज्ज्ञेयः।
तुङ्गे भुजंग व्यालग्राही स्वर्क्षे तु शङ्खध्माः ॥ ३१ ॥
अन्येषु राशिषु सति क्रूरतमो धीमता वेद्यः।
व्याघ्रवृषमेषगोपुच्छाश्वा धेनुस्ततो महिषी ॥ ३२ ॥
गवयश्चेत्यर्काद्यैर्युक्ते वा वीक्षिते क्रिये लग्ने।
शरभो धेनुर्हरिणः कपिर्हयो धनुरथ महिषी ॥ ३३ ॥
महिषी चेति विलग्ने गवि रव्याद्यैर्युतेऽथवा दृष्टे।
अग्रेऽपि तत्तदृक्षेषूदयभूतेषु चिन्त्यतां सुधिया ॥ ३४ ॥
फलमम्बरनिलयानां योगैर्वा वीक्षणैर्वापि।
युग्मादिमीननभान्तेष्वर्के बभ्रुः खरोऽथ सिंहः श्वा ॥ ३५ ॥
जम्बुकमेषमतङ्गजमहिषीभुषका वृषश्चेति।
हरितौलिचापगेऽब्जे सिंहो धनुर्हयश्च विज्ञेयः ॥ ३६ ॥
हरिकीटयोर्महीजे व्याघ्रश्छागश्च समुदीर्णः।
हरिचापयोः कपिर्ज्ञे युगतौलिघटेषु वाक्पतौ दन्ती ॥ ३७ ॥
जीवे कार्मुकझषयोः प्लवगच्छागौ क्रमात्कथितौ।
सिंहतुलाचापस्थे भृगुजे श्वा वत्सकस्तुरङ्गश्च ॥ ३८ ॥
चापगभृगुजे शशिना दृष्टे धेनुः पयस्विनी दृष्टे।
सौम्येन द्वन्द्वा गौः रविणा जीवेन वा सगर्भा गौः ॥ ३९ ॥
तादृशि भृगुजे दृष्टे शनिना वा राहुणा भवेद्वन्ध्या।
शुक्रे तथाविधे गोः कुजेन दृष्टे भवेच्छुष्का ॥ ४० ॥
चन्द्रादीनां सौरेरहेश्च भवनेष्वनुक्तेषु।
रविफलवत्फलमूह्यं सुधियेति वदन्ति संप्रदायज्ञाः ॥ ४१ ॥
इति जीवसंज्ञकाण्डः षष्ठः शेषार्यविदुषासौ।
चन्द्राब्धिमितैः पद्यैर्ग्रथितोऽस्यां प्रश्नमालायाम् ॥

इति प्रश्नमालायां षष्ठो जीवकाण्डः

## अथ सप्तमो नष्टकाण्डः

तनुगतयुगमृगमुखयोर्हयकर्क्यारूढयुक्तयोः क्रमशः।
केसरिवनितोदययोर्घटमीनारूढयुतयोर्वा ॥ १ ॥
नष्टाप्तिर्बहुलाभः कथितस्य विपर्यये विरुद्धफलम्।
उदयच्छत्रारूढाश्चरा यथासम्भवं भवन्ति यदि ॥ २ ॥
वस्त्वविनाशः सन्धिः सिद्धिः सेनागमो गदोपशमः।
उदयादिषु नष्टाप्तिः स्थिरेषु न मृतिर्न रोगशान्तिश्च ॥ ३ ॥
उदयादिषूभयेषु व्याधेर्न शमः कलाल्पा स्यात्।
उदयादिषु भवनेषु ग्रहाः शुभा यदि शुभं भवेत्सर्वम् ॥ ४ ॥
अशुभास्तु यदि विनश्यत्यखिलं कर्मेति निश्चिनुयात्।
तेष्वेव भेषु नीचाः क्रूरा रिपवोऽस्तगा वा चेत् ॥ ५ ॥
नष्टं वस्तु न लभ्यं शुभास्तु यदि तेषु लभ्यं स्यात्।
उदयादिभ्यः कोणे यदि शुभखेटा हि लभ्यते नष्टम् ॥ ६ ॥
तेभ्यः कोणे पापाः खेटा यदि वस्तु नैव लभ्यं स्यात्।
उदयादिभ्यः सहजे क्रूरे तनये शुभे च सति ॥ ७ ॥
केनापि नष्टवस्तु प्रदीयते वा स्वयं हर्त्रा।
उदयादिषु परिधिधनुर्धूमाणुभिरीक्षितेषु न हि नष्टम् ॥ ८ ॥
तद्वस्तु तादृशखगाक्रान्तभककुभि स्थितं ब्रूयात्।
पृष्ठोदये हिमांशौ नष्टद्रव्यं हि लभ्यते तत्स्थे ॥ ९ ॥
चन्द्रे शनिना दृष्टे न लभ्यमिन्दोः कुजेऽम्बरे लभ्यम्।
उदयादिभ्यः खेऽर्के रीतिस्तुर्ये विधौ कांस्यम् ॥ १० ॥
व्योम्नि कुजे ताम्रं स्यादुदयादिगयोर्बुधेज्ययोः क्रमशः।
त्रपु हेम चाम्बुनि भृगौ रजतं द्यूने शनौ भुजङ्गे च ॥ ११ ॥
कृष्णो लोहः सीसं चेत्थं नष्टान्यमूनि लभ्यन्ते।
पापयुते खे नष्टाश्चतुष्पदास्ते ध्रुवं लभ्याः ॥ १२ ॥
द्विपदचतुष्पदबहुपदविहगोदयगे विधुन्तुदे क्रमशः।
तत्तादृशाः प्रणष्टाः प्राणभृतस्ते तु बन्धनगाः ॥ १३ ॥
अन्यतरस्मिन् लग्ने सद्मनि नष्टं कुलीरवृश्चिकयोः।
मृगमीनोदययोस्तु द्रव्यं नष्टं विटङ्कमध्यगतम् ॥ १४ ॥

# भुवनेऽस्मिन् कवयो निरङ्कुशाः

[लेखकः—ले. डा. शिवनाथशर्मा शास्त्री साहित्याचार्यः पुरातत्त्व-
विशारदः विद्यावारिधिः डी. ओ. सी. आदि.
प्राध्यापकः गवर्नमेण्ट् ओरियण्टल् कालेज्
श्रीनगर—काश्मीर]

खलु विदग्धवैदग्ध्यदग्धे अनैसर्गसत्ये केवलं प्रथमप्रमाण-प्रमेये चार्वाकवाकोवाक्यविकल्पविकल्पिते चाक्षुष्ये भूतग्रामग्रामे प्रभवे भवे को हि नाम जनः पित्तोपहत इव शशिधवलमपि शङ्खं पीतं तिमिरावृतदृष्टिर्निसर्गबन्धनमुक्तं न मन्यते अस्वं स्वात्मानम्। मयेदं कृतमहमेवं करोमि करिष्यामि चेत्यहंतालेपलिप्तो महोपनिष-त्सारशासनापरिचितः तत्संस्कारासंस्कृतो वा गूढं मूढं अहं-ताममतापरिपक्वं लोकं विदुषां धुरीणं श्रेष्ठमाढ्यानां प्रथमं कला-वतां पुरोवर्तिनं नीतिजुषां जानाति ज्ञापयति चान्यानित्यहो परा काष्ठा मिथ्यागर्वस्य, हन्त विजृम्भितमज्ञानस्य च निर्विवादसिद्ध-सिद्धान्तिसिद्धान्तभूतमिदं—यत् सरस्वतीप्रवाहे ब्रुडितो न कोऽपि स्यात्पारदृश्वा विना जन्मान्तरीयसुकृतपरिपाकफललभ्यदेशिक-प्रसादमिति निश्चप्रचम् ॥

लक्ष्मीप्रवाहस्यापि तथैव नान्तरीयत्वं यत् कथंकथं न भूपतयः स्वराज्यसंस्थापनाय समराङ्गणसूत्रधाराः समभूवन् इत्यत्रापि ऐतिह्यं परमं प्रमाणम्। दारिद्र्यानलनिर्वापणार्थमागतान् धनजलचातकान् त्यक्तस्वगृहग्रामान् सेवार्थं भटवृत्तिलग्नान् स्वम-नोरथपूर्त्यै श्वमारं न मारयामासुः। स्वजयमरीचिकाभ्रान्ताः संख्ये कोट्यर्बुदख्यातिगां न निमज्जयामासुर्जले समुद्रस्य राज्य-लक्ष्मीम्, गार्हस्थ्यभरणासमर्था लोकाचारविचारचातुरीपतिता अक्षमाः पुरुषकाः संस्कारादिभिः स्वात्मीकृतां वधूमिव जन-समक्षं प्रतिप्रेषयन्तोऽपि पितृगृहं न लज्जन्ते प्रजाप्रसूं समुद्र-सन्ततिं तत्रैव श्रियं प्रत्यर्पयितुम्। पारतन्त्र्यगुणबद्धो मनुष्यो राजा धनी विद्वान्वा पदमेकमपि न स्वतन्त्रवाही भवितुमर्हति भूमौ प्रकृतिधर्मेणेति भूमिवाहः ॥

अन्तरिक्षवाहे च कालपारतन्त्र्यात् सूर्यादयो द्युचरास्तेजस्विनोऽपि भग्नाभा यावद्द्रव्यजातं प्रकाशनसमर्था मनागपि "भीषास्माद्वातः पवते" इत्यादिश्रुतिप्रतिपादितनीत्या न निरङ्कुशाः। ब्रह्मलोकपर्यन्तस्थितिभाजोऽपि कालचक्राविधेया ईश्वराः पराज्ञाबद्धाञ्जलिपुटाः स्वनेम्यन्तरे स्थितिमन्तः पदमेकं स्वेच्छया विचलितुमसमर्थाः। अपि च परायत्तत्वसद्भावएव भवः, तेनेश्वरास्तित्ववादोऽपि वादुर्निवारो वावदूकवाक्कीलनकरः॥

यथा हि—लोके तावद्राज्यप्रणाली ग्रामाध्यक्षतो महामहा शासकपर्यन्तमधिकारपरम्परया तत्तन्नीतिं शिरसि धृत्वा नीतिसंमुखा पूर्णरूपेणास्वायत्ता वरीवर्ति, नास्त्यत्रापह्नवलेशोऽपि। राजतश्चक्रवर्तिप्रभृति ततश्चोत्तरोत्तरगत्या उपर्युपरि लोकेशपर्यन्तं "यथापूर्वमकल्पयत्" तथैव लोकरीतिः। एवं हि विचार विचक्षणाः ज्ञानविज्ञानशिक्षादीक्षाबद्धकङ्कणा विशिष्टज्ञानप्रकाशविनष्टतमःपटलाः स्वयं परिशील्य लोकमप्यागमसिद्धसिद्धान्तेन विदितवेदितव्यं चक्रुर्यन्न लोकचतुर्दशके विनैकं परब्रह्म पूर्णस्वातन्त्र्य कस्यापि भौतिकस्य। किञ्च साहित्यमर्मविदां वरिष्ठैः काश्मीरीयैः भोजराजकालमलङ्कुर्वाद्भिः श्रीमम्मटभट्टाचार्यपादैः— नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्। नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति। इति मङ्गल कारिकयैव ब्रह्मनिर्मितिपारतन्त्र्यविनाकृतवैलक्षण्यं कविकर्मणि सुस्फुटं वर्णितम्। साहित्यसुधारसास्वादव्यसनलुब्धैः सुवासनावासितान्तःकरणैः प्राज्ञैर्दृश्यते च। यत्—कवयो नियतिनियोगात् श्रावणविकासां लीलानृत्यमनोरमां मालतीं मेघतडित्सौदामिनीदाम्नि माधवपर्वा मितया स्वशक्त्या प्रभवन्ति विकासयितुम्। किं वा नाम दुःशकं कवीनां समये। एवं च कविसमयः—

स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम्।
मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवातात्
चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात्कर्णिकारः॥

सुखदुःखात्मकं नियतिनियमितं कविः सुखात्मकमेव वर्णयितुं क्षमः। अपरं च घृणाजुगुप्सितं वस्तु स्वकल्पितरूपकोप-

मादिभिः "मांसपिण्डौ कनककलशौ श्लेष्मागारं चन्द्रं क्लिन्न-प्रदेशं करिवर (शिरः) करस्पर्धि, इत्यादि केवलाह्लादजनकमेव निरूप्य सम्पादयति। साहित्यसागरपर्यालोचनया एवं साहित्य-मणीनवाप्तुकामाः प्रभवन्ति गूढमपि प्रकाशयितुं साहित्यचन्द्रिका-क्षमया। अतो यद्यस्ति लोके कोऽपि स्ववश्यः स्वतन्त्रश्च स केवलं कविरेव भवितुमर्हः। यतः कविप्रौढोक्तिसिद्धवस्तुनि प्रसृतिः स्वातन्त्र्यस्य करामलकायते। नास्ति खलु कविषु उक्तिवैचि-त्र्योद्भवमेव स्वातन्त्र्यं अपि तु देशकालधर्ममर्यादासंस्कृत्यादि दुष्टमविदग्धवाक्स्खलितमपि कीर्तिकारणम्। तत्तद्दोषजातमवा लोच्यापि तत्समुद्बोधने अन्येषां वाक्स्तम्भात्। अतः के नाम वयमक्षुण्णमार्गपथिकाः। परं स्वनभ्यन्तरे गच्छन्पान्थस्तु यत्र तत्रोपत्यकां वृक्षं लोष्टं पाषाणं निम्नोन्नतं वा क्षतकरं क्षितिस्थानं मार्गे पश्यति सर्वं तदवधार्य पत्रेषु संनिबद्धं वा कृत्वा सर्वानु-पान्थसमवबोधनाय पुरातत्वोद्धरणविकासं करोत्येव। युक्तं चैतत् अद्यतननीतिभाजां प्रत्नतत्त्वविशारदानां यत् वर्तमाननीति-रीतिचातुरीचणास्ते शास्त्रसाहित्यं पर्यालोचयन्तो यत्र यत्र वा आलङ्कारिकबद्धां नियतिकृतनियमरहितां स्वातन्त्र्यप्रतिभां ते प्रवि भावयेयुः। यथावदन्यसाहित्यकसमवबोधाय च प्रकाशयेयु-र्नियतम् अन्यथासाहित्यविकाससंकोचसंभवावासः (भावः)। नैष दोषो न वाक्चापल्यं न विशृंखलता न चाभिमानभूमिः प्रत्युत सुर-सरस्वतीसमुद्धरणैकहेतुरिति पुरातत्वसंरक्षकाग्रगण्यानां राद्धान्त इति विद्वांसो विदांकुर्वन्तु॥

प्रकृते च कविस्वातन्त्र्ये सिंहावलोकनेन दिङ्मात्रमेतत्। तथा हि—"बाणोच्छिष्टं जगत्सर्वं" मित्यादिसुभाषितोक्त्या कवि प्रथमकक्ष्यावर्तमानाः सप्तमशतकपूर्वार्धकालीना हर्षवर्धनस्य कान्य-कुब्जाधिपतेः सभाशिरोमणयो बाणभट्टपादाः कवीनां स्वातन्त्र्यं स्वकृतकादम्बरीप्रथमभागे यत्र तत्र सुस्फुटं निरूपयाञ्चक्रुः। तत एव कतिपयानंशान् सर्वसाधारणासाधारणजनजिज्ञासया सुरसरस्वतीविधेयोऽयं जनः संक्षेपत उपहारीकरोति॥

अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथा वै(स्मै) रोचते विश्वं तथैतत्परिवर्तते॥

कविना शुकनासोपदेशप्रघट्टके गुर्वादरं बहूपदिश्यापि आचार्यगृहनिर्गमनकाले कथं (कविना) आचार्यगृहाद्राजगृहमानीतो नीतिरीतिभाजा गुरुमपृष्ट्वैव विस्मारितसाधुचरितश्चन्द्रापीडः। तथा राजगृहमुपागतं तं प्रासादावस्थितकिंनरयुगलकपरिचयवन्तं च पुनर्मृगयाप्रघट्टके किरातजनपदं विश्रामार्थं संस्थाप्य अपूर्वदर्शनतया समुपजातकुतूहलः। इत्यादिना शैलशिखरादवतीर्णे किन्नरयुगले पूर्वपरिचयरहितमिव कृतग्रहणोत्सुकं किं वा निबद्धम्। पुण्डरीकोत्पत्तिव्याख्यानावसरे तदुत्पत्तिं निगदता अपूर्वया आगमविरुद्धया च प्रणाल्या श्वेतकेतुश्रीलक्ष्मीभ्यां पुण्डरीकोत्पत्तिरुपवर्णितेति किम्॥

एवं कपिञ्जलपरिदेवनप्रघट्टके "हा सरस्वति विधवासि" इत्यत्र सरस्वतीविषये विधवाशब्दप्रयोगात् द्विजन्मजन्मानादृता रीतिः किमनुसृता। महाश्वेताचन्द्रापीडयोः कादम्बरीश्रीमण्डपे गतयोः तमालिकया शुकस्य संकरीकरणप्रयोगः स्मृतिविरुद्धोऽपूर्वोऽलौकिकश्च इत्यपि कथं समुपवर्णितः। तत्रैव "दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः" इत्यत्राप्रयुक्तदोषदुष्टमपि किं स्वीकृतम्॥

इत्थं दिङ्मात्रेणैव केषुचिदंशेषु महाकवेरस्य स्वातन्त्र्यं स्वाच्छन्द्यञ्च चित्रितं कृपया यथावसरं प्रकाशनीयं यथा सर्वं सम्यगवबोद्धुं शक्नुयुरितरे। अत्र लेखकस्य लेख(खि)नीसंचालने कवीनां पूर्णस्वातन्त्र्यप्रस्तावनिरूपणं प्रयोजनमेवासीत्। तेन "भुवनेऽस्मिन् कवयो निरङ्कुशाः" इति यत्सुभाषितं तत्सर्वथा सुसंगतमेवेति शम्॥

॥ श्रीः ॥

# लक्ष्मीकल्याणं नाम समवाकाररूपकम्

पैत्तंबाडि सरसकविराज

**रामानुजकविना**

विरचितम्



मैसूरु

राजकीय शाखामुद्रायन्त्रालये सम्मुद्रिता च विजयतेतराम्

१९५४

23

॥ श्रीमते हयग्रीवाय नमः ॥

# लक्ष्मीकल्याणम्

---

श्रियं दिशतु नस्सदा निखिलमोहदः सुंदरी
बुधामृतवरप्रदोऽहिपतिपत्तनशो हरिः ।
कृपानिधिरुदारधीः प्रणतपारतन्त्र्यं वहन्
तरङ्गमुखनन्दिनीं निजहृदि श्रियां योऽकरोत् ॥ १ ॥

(नान्द्यन्ते सूत्रधारः)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य) आर्ये, इतस्तावत् ।

(प्रविश्य नटी)

**नटी**—अज्ज, एषम्हि आणवेदु ।

**छाया**—आर्य, एषाऽस्मि, आज्ञापयतु ।

**सूत्रधारः**—आर्ये, केन ? कविना विरचितानि कुत्र ? कुत्र ? कानि रूपकाण्यभिनीतानि ?

**नटी**—(स्मृत्वा)—

वेदंतसूरिसरिदत्त्वा ओ ओ बु अ अ रायण अरम्मि ।
सारदहरिसणिरोहा हिरूखाको सिरिंदसि अघेरम्मि ॥ २ ॥
सिरिडंभ ओणणओरे दसि असदण मुणित्तअजअत्खम् ।
वीहिलत्खणमिम्मं रूवअमवि सांपदाइअं चित्तम् ॥ ३ ॥
कंजीपुरम्मि देवाहिराजसुमहम्मि देसिअघेरम्मि ।
कव्हिोळाहळ णामअ पयंकं णाडअं महिदम् ॥ ४ ॥
सिरिसुअण ओर पद्मावदिप्पवमहे खु भुवणाविदिदम्मि ।
सिरिवासविळासत्खो माणा पद्मावदीविवाहत्खो ॥ ५ ॥

सिरिरंगदिव्वण अरे वसंदसमअम्मि रंगणाहस्स ।
सुद्धात्मइथ्थिआपरिणअप्पअरणं तहाहिणीदं खु ॥ ६ ॥
किण्णाहिंदपुरीउअमज्झम्मि पिणाइणीसुदीरम्मि ।
पैत्तांबाड्यण्णख्खो राअदि सत्ताभिहग्गहारो हि ॥ ७ ॥
सिरिसैळसक्कवट्टिअउळांबुहिविहू खु सिरिसवराहज्जो ।
सूरी उवास तम्सि सिरीसपदपद्मभक्तिसंपुण्णो ॥ ८ ॥
तस्स कुमाळेण अविप्पवलेण यदिंदणामधण्णेण ।
जणव्वरुवआइवि इमाइ सव्वाइ रइदाइ ॥ ९ ॥
अज्झवि देणरामाणुएणव्व ळच्छीअळ्ळा ळणामअम् ।
रूवअं समवाआरलख्खणदं किदं खुवि ॥ १० ॥

छाया—

वेदान्तसूरिचरितव्यायोगो भुजगराजनगरे ।
शारदहर्षनिरोधाभिख्योऽङ्कः श्रीदेशिकगृहे ॥ २ ॥
श्रीकुम्भघोणनगरे देशिकसदन मुनित्रयजयाख्यम् ।
वीथीलक्षणमिश्रं रूपकमपि सांप्रदायिक चित्रम् ॥ ३ ॥
काञ्चीपुरे देवाधिराजसुमहे देशिकगृहे ।
कलिकोलाहलनामकपञ्चाङ्कं नाटकं महितम् ॥ ४ ॥
श्रीशुकनगरे पद्मावतीप्लवमहे खलु भुवनविदिते ।
श्रीवासविलासाख्यो भाणः पद्मावतीविवाहाख्यः ॥ ५ ॥
श्रीरङ्गदिव्यनगरे वसंतसमये रङ्गनाथस्य ।
शुद्धात्मस्त्रीपरिणयप्रकरणं तथाऽभिनीतं खलु ॥ ६ ॥
कृष्णाहीन्द्रपुरीयुगमध्ये पिनाकिनीसुतीरे ।
पैत्तांबाड्यन्याख्यो राजते सत्राभिधाग्रहारो हि ॥ ७ ॥
श्रीशैलचक्रवर्तिजकुलाम्बुधिविधुः खलु श्रीवराहार्यः ।
सूरिरुवास तस्मिन् श्रीशपदपद्मभक्तिसंपूर्णः ॥ ८ ॥

तस्य कुमारेण कविप्रवरेण यतीन्द्रनामधन्येन ।
येनैव रूपकाण्यपीमानि सर्वाणि रचितानि ॥ ९ ॥
अद्यापि तेन रामानुजेनैव लक्ष्मीकल्याणनामकम् ।
रूपकं समवाकारलक्षणं कृतं खल्वपि ॥ १० ॥

**सूत्रधारः**—(श्रुत्वा, सम्भ्रमणहर्षं) यश्च कविः, आत्मबालापरिणय-प्रकरणकरणमध्ये, स्वाचार्यतातपादं, अचिन्तितासन्नस्वदेह-वियोगकाले, परमात्मस्वरूपरूपगुणगणदिव्यचेष्टितादिचिन्तनसु-प्रसन्नमुखकमलं, संसेव्य, साञ्जलिरेवमपृच्छत्—

आह्निकोक्तेन मार्गेण ह्यपि कार्यं ? भरार्पणम् ।
प्रयोगोऽपि ग्रहीतव्यो भरन्यासप्रकाशकः ॥ ११ ॥
इति विज्ञापितैस्तैरेवमाज्ञप्तम्—
मयि नित्यां गतिं याते स्वनिष्ठां त्वं चिकीर्षसि ।
परमात्मस्वरूपं हि दुर्ग्राह्यं ज्ञानिनामपि ॥ १२ ॥
तातपादो ममास्तीति न हि कार्या दृढा मतिः ।
सन्ति श्रीवासयोगीन्द्राः करुणावरुणालयाः ॥ १३ ॥
शान्तानां परमस्वात्मस्वरूपादिकवेदिनाम् ।
तेषां श्रीपदपाथोजयुगयोर्हि भरार्पणम् ॥ १४ ॥
त्वया कार्यं, मदीयं च नियोगं कुरु नान्यथा ।
' दृढपूर्वः श्रुतश्चे ' ति वाक्यान्मौर्ख्यस्य नार्हसि ॥ १५ ॥
इत्यादिश्य तदैव नित्यनिलयं यातेषु तातेष्वसा-
वाज्ञां तां शिरसा वहन् प्रतिदिनं तत्पूर्तये श्रीपतेः ।
स्वाराध्यस्य पदाब्जयोर्निजभरन्यासं वितन्वन् स्वयं
ह्येतत्कारयिता हरिर्वरदराडेवेति मेने स्फुटम् ॥ १६ ॥

ततश्च श्रीवैशाखोत्सवारम्भसमये स्वप्नेऽपि स्वाचार्यतातपादैरेव-माज्ञप्तो, योऽसौ कविः,

श्रीमद्रङ्गरामानुजसंयमिन्द्रादिव्याश्रममलंकुर्वाणम्—
श्रीमच्छ्रीरंगरामानुजमुनिकरुणालब्धसर्वार्थतत्व-
ज्ञानश्रीवासरामानुजमुनिकृपयाऽवाप्तवेदान्तयुग्मम् ।
प्रेम्णा ज्ञानात्मजत्वं, प्रथितगुणगणैस्तेजसा चास्य साम्यं
प्राप्तं श्रीवामयोगीश्वरमतुलमहं शान्तिपूर्णं प्रपद्ये ॥ १७ ॥

इति निक्षिप्तात्मभरः कृतकृत्योऽभवत् ।

तदद्यापि ज्ञायते कुत्र समवेता कीदृशैरियं परिमण्डिता परिषदिति ।

**नटी**—(परितो विलोक्य)—

भादि महुरंदअस्वाणअरीगुरुणो खु भास्सआरस्स ।
जस्सिमहकण्णेहिंरइदो दावादिपं असंस्खारो ॥ १८ ॥

तस्सि जेट्ठोस्सवम्मित्तिहुवणविदिदे पुप्फअस्खंविमाणं सीदासौ-मित्तिउत्त रहुउळादिळए आरूहे तस्स पुव्वं । देसे वेदंदधम्मप्पहु-दिणिहिलसच्छत्तपारंगदाणं एसा विद्दद्दराणां लसदि परिसआ ळध्धस-व्वाअमाणम् ॥ १९ ॥

दाणिं--एसोसक्कळओकइगुरुकिवाविख्खेध्घसारस्सदा वाणी तस्सअसुप्पसण्णमहुरा सभ्भा अहिण्णा असी । एदं खीरधि आसुभंत्ति भुवणस्खादं णवं रूवअं णट्टमिप्पवटाहवं आणिवुणो सव्वसमंसगदम् ॥ ॥ २० ॥

दा, तएव्व रूवअं अहिणेदव्वम्—जस्सि पुव्वं पविसदिहरी संखसख्खादिपाणिदेवेहिंसद्दुहिणागिरिसामत्तणाहादिएहिम् । लध्धुं भोग्गं असिदमहि असंथु दोदेवदेवोखीरंभोहिं महिअविसअं ळध्धु आमोअ-ळच्छीम् ॥ २१ ॥

**छाया**—भाति मधुरान्तकाख्या नगरी गुरोः खलु भाष्यकारस्य ।

यस्मिन्महापूर्णै रचितास्तापादिपञ्चसंस्काराः । तस्मिन् ज्येष्ठोत्सवे त्रिभवनविदिते पुष्पकाख्यं विमानं सीतासौमित्रियुक्ते रघुकुलतिलके

आरूढे तस्य पूर्वे देशे वेदान्तधर्मप्रभृतिनिखिलसच्छास्त्रपारङ्गता-
नामेषा विद्वद्वराणां लसति परिषल्लब्धसर्वागमानाम् ॥ १९ ॥

इदानीं । एष सत्कुलजः कविर्गुरुकृपावक्षिद्धसाग्भवतो वाणी तस्य च सुप्रसन्नमधुरा सभ्या अभिज्ञा अमी । एतत्क्षीरधिजाशुभमिति भुवनख्यातं नवं रूपकं नाट्ये प्रवरो भवांश्च निपुणस्सर्वं समं संगतम् ॥ २० ॥

तस्मात्तदेव रूपकमभिनेतव्यम् । यस्मिन् पूर्वं प्रविशति हरिः शंखचक्रादिपाणिर्देवैस्सद्रुहिणगिरिशामर्त्यनाथादिकैः लब्धुं भोग्यममृतमधिकं संस्तुतो देवदेवः क्षीरांभोधिं मथित्वा स्वयमपिलब्धुकामश्च लक्ष्मीम् ॥ २१ ॥

**सूत्रधारः**—(पुरो वीक्ष्य) आर्ये कथं पूर्वोक्तलक्षणः ब्रह्मरुद्रेन्द्रादिभिस्स्तूयमानो हरिरितएवाभिवर्तते । तदारब्धकार्यं निर्वहावः ।

(इति निष्क्रान्तौ)

(प्रस्तावना)

(ततः प्रविशति यथानिर्दिष्टो हरिः)

**हरिः**—(आत्मगतम्) अहो मम हृदयवर्तिन्यपि हृदयवल्लभा कलशजलधिकन्यकात्वं प्राप्तुं क्षीराम्बुनिधौ वर्तते । तामेनां परिग्रहीतुं प्रयते । (प्रकाशम्)

क्षीरांभोधेरमृतं लब्धुं देवाह्यमर्त्यतावाप्त्यै ।
असुरगणयुद्धसमये स्तुवन्ति मां ब्रह्मगिरिशशक्राद्याः ॥ २२ ॥

तत्तेषां प्रियं करिष्यन्, समुद्रमथनायोद्योजयिष्ये ।

(ततः प्रविशन्ति ब्रह्मादयः)

**ब्रह्मा**—नमो नमः पाहि हरे प्रपन्नान्नमोनमस्त्वच्चरणांबुजे नः । नमो नमो दैत्यकुलातिभीतान् नमो नमस्तेऽस्त्वमृतं प्रदाय ॥ २३ ॥

(इति प्रणमन्ति)

**हरिः**—भो भो ! ब्रह्मादिदेवास्त्यजत भयमिदं दैत्यपाशौघजातं
युष्माकं रक्षकेऽस्मिन् मयि निखिलजगत्त्राणदीक्षे स्थिते किम् ?
दैत्यैरस्माकं पयोऽध्युन्मथनजममृतं यूयमेवातिभोग्यं पीत्वाऽ-
मर्त्या भवेतासुरकुलमखिलं नाशयन्ते बलिष्ठाः ॥ २४ ॥

(आत्मगतं) एतेन समुद्रमथनरूपकार्येण ममापि लक्ष्मीप्राप्तिर्भ-
विष्यति ।

**ब्रह्मा**—शृणुत भगवदाज्ञां शंकरेन्द्रादिदेवा
अमृतमसुरसंघैः क्षीरसिन्धुं प्रमथ्य ।
तदुदितमथादिव्यं पीत वीर्यप्रदं चेत्
निखिलमनुजसंघान्नाशयेतेति यूयम् ॥ २५ ॥

तदधुना—
अमृतं पीतमस्माभिः क्षीरसिन्धूद्भवं यदि ।
वीर्यशौर्यादिसंपन्ना वयमद्य भवेमहि ॥ २६ ॥

इति कृतसमाधानैर्दैत्यैस्सह क्षीरसमुद्रमथनं करवाम ।

**शंकरः**—जनक, कथं प्रमथ्यः अनेकजलजन्तुनिवासभूतः अगाहः(धः)
क्षीराब्धिः ?

**ब्रह्मा**—
मंथानं मन्दरं शैलं कृत्वा रज्जुं च वासुकिम् ।
मथ्नाम वयमेकत्र सर्वेऽन्यत्रापि दानवाः ॥ २७ ॥

पुरो वीक्ष्य, (ससंभ्रमं) कथमत्राप्यायान्ति दानवाः ? तद्देव-
लोकमेव गच्छामः ।

(इति सर्वे परिक्रामन्ति)

(ततः प्रविशन्ति दानवाः)

**दानवाः**—रे रे ! देवाश्शिवाद्या भुजबलमखिलं दृश्यतामस्मदीयं
युष्माकं चापि दृश्यं प्रणतजनपरित्राणरक्षैकदीक्षः ।

पात्यस्मांश्चक्रपाणिर्हरिरिति भवतां मानसे मास्तु शङ्का
मायावी भोगिभोगे स्वपिति हि समरे स्थातुमग्रेऽप्यशक्तः ॥२८॥
(पुरोऽवलोक्य) कथमत्रैव वर्तन्ते लोकस्य स्रष्टा, रिपवश्च !
तद्ब्रह्माणमुपसर्पामः ।

(इति उपसर्पन्ति)

**ब्रह्मा**—(दानवान् वीक्ष्य)—

मन्थानं मन्दराद्रिं भुजगकुलपतिं वासुकिं चापि रज्जुं
कृत्वा तच्छीर्षपुच्छं वयमधिकबलास्सर्व एव प्रगृह्य ।
आकृ(क)ष्टारः पयोब्धेर्यदि हि सुमथिताद्वीर्यदं दिव्यमस्मा-
ज्जातं पीत्वाऽमृतं श्रीसहचरकृपया शर्मतृप्ता भवेम ॥ २९ ॥

**दानवाः**—(आत्मगतं)—

वयमेवामृतं दिव्यं सन्त्यज्य निखिलान् सुरान् ।
पीत्वा वीर्यादिसंपन्ना भजेम स्वर्गसंपदम् ॥ ३० ॥

(प्रकाशं)ब्रह्माणं वीक्ष्य, (सप्रणामाञ्जलिबन्धं) भवन्निदेशवर्तिनो वयं सर्वेऽपि । तत् इन्द्रादिदेवैः सह मन्दरगिरिमुन्मूल्य क्षणादेव कलशजलधितीरे स्थापयामः । सोपेन्द्रशंकरैर्भवद्भिः नागराजो वासुकी रज्जुत्वेन नियुज्यताम् ।

(इतीन्द्रादिदेवैस्सह निष्क्रान्ताः)

(ततः प्रविशति वासुकिः)

**वासुकिः**—(पुरो वीक्ष्य, अद्यैवैतद्दिनं सुप्रभातं जातम् । यतोऽत्रैव —

वर्तन्ते ब्रह्मगौरीशौ सृष्टिसंहारकारिणौ ।
केशवश्श्रीपतिर्विष्णुस्तन्नियन्ता च रक्षकः ॥ ३१ ॥

तदुपसृत्य प्रणमामि (इति प्रणमति)

**ब्रह्मा**—आयुष्मन्, महदाज्ञानुसारी भव ।

**उपेन्द्रः**—वासुके, नागराज देवासुरसमाधानार्थं अस्मदुपनिमन्त्रितो विषयः—

आसनगृहोपधानछत्रांशुकतल्पपादुकाप्रमुखैः ।
रूपैश्शेषस्य हरेरस्य त्वद्भ्रातुरपि मुखाज्ज्ञातः ॥ ३२ ॥

**वासुकिः**—(स्वगतं) ज्ञात एव ।

अमृतं यदि लब्धं स्यात् विद्राव्य सुरासुरौ च तत्पीत्वा ।
वयमेव वीर्यवन्तः कद्रूस्तनया भवेम सर्वेऽपि ॥ ३३ ॥

(प्रकाशं) तदर्थमेवाहमागतः ।

**ब्रह्मा**—(सहर्षं) तत् वयं पारावारतीरमेव यामः । यावद्देवासुराः मन्दरगिरिमुन्मूल्य, संगृह्यागच्छन्ति । (इति सर्वेऽपि परिक्रामन्ति)

**वासुकिः**—गरुडो दर्शयामास पुरा मन्दरपर्वतम् ।
पक्षाभ्यामुद्वहन्नस्मान्मातृवाक्परिपालकः ॥ ३४ ॥

तत्, तदुचितपृथ्वायतशरीरं परिग्रहीष्ये । (इति तथा करोति)

(ततः प्रविशन्ति मन्दरगिरिमुद्वहन्तो देवासुराः)

**देवासुराः**—(वासुकिं वीक्ष्य) (सभयकंपगद्गदं) अहो ! महाव्याळो महाव्याळः ! गिरिगुहाद्वारवत् मुखमावृत्य तिष्ठति । यद्यत्र प्रविशेम ; एतन्मुखप्रविष्टा भवेम । तदमृतपाने नास्माकमभिलाषा । (इति भयसञ्जातमोहेन ब्रह्माणमप्यनवलोकयन्तः मन्दरपर्वतं त्यक्त्वा सत्वरं विद्रवन्ति)

**ब्रह्मा**—(देवासुरान् वीक्ष्य) (पुरतो गत्वा) भो भो देवासुराः, कथमेनं वासुकिं नागराजमपि वीक्ष्य, पलायिता भवथ ?

**देवासुराः**—(ब्रह्माणं वीक्ष्य) महान्नागोऽयम् !

**ब्रह्मा**—(सान्त्वयित्वा) अयमेव वासुकिः । प्रकृतिस्था भवत । समुद्रमथनार्थमेवैतादृशशरीरेण वर्तते ।

**देवासुराः**—(ससमाश्वासं) इदानीं भवत्सेवनेनैव प्रकृतिस्था वयं जाताः। (इति मन्दरपर्वतमुद्वहन्तस्सर्वे क्षीरसागरतीरं यान्ति)

**वासुकिः**--(देवादीन्वीक्ष्य) रज्जुरूपमच्छरीरपरिवेष्टितः मन्दरः क्षीरनिधौ निधीयताम्। (इति मन्थानरज्जुर्भवति) (सर्वे मन्दरं वासुकिना परिवेष्ट्य क्षीरसिन्धौ निपातयन्ति)

**देवाः**—(असुरान्वीक्ष्य)

नागाधिपस्यास्य वयं शिरश्च पुच्छं च यूयं निखिलाः प्रगृह्य।
पर्यायशः कर्षणमाचरामो यावत्सुधालाभमतो बलिष्ठाः॥ ३५॥

(इति सर्वे यथाभगवन्निदेशमाचरन्ति) (मन्दरगिरिर्देवादिभिः समाकर्षति)

**सर्वे**--(विष्णुं वीक्ष्य)

पाहि पाहि दयांभोधे, भवदाज्ञानुसारिणः।
अद्रिं समुद्वहन्नस्माननतन्मंदरजाड्यात॥ ३६॥

**विष्णुः**—पूर्वमेव कमठाकृतिं वहन्नुद्वहामि निखिलं जगत्स्वयम्।
अद्य कूर्मवपुषा बिभर्म्यहं मन्दरं च परिपालनाय वः॥ ३७॥

(इति मन्दरं बिभर्ति) (सर्वे पुनर्मथ्नन्ति)

(नेपथ्ये महान्कलकलः)

**सर्वे**—(सहर्षं) अद्यैवामृतप्रादुर्भावसमय इव। (इति पश्यन्ति) (ततः प्रविशन्ति ज्येष्ठारुद्रावारुण्यप्सराएरावतोच्चैःश्रवोधन्वन्तरिकल्पककामधेनुश्रीवत्सकौस्तुभपाञ्चजन्यश्रीमहालक्ष्म्यमृतकिरणामृतपूर्णघटधरमहापुरुषाः) (देवादीन्वीक्ष्य) के पुनरत्रास्मत्परिग्रहीतारः?

**असुराः**--(स्वगतं) अमृतस्यैव वयं नान्येषाम् (प्रकाशं) देवा एव।

**ब्रह्मा**—(ज्येष्ठां वीक्ष्य) ब्रह्महत्याति(दि)कारिणस्त्वदाश्रया भवन्तु। (इति क्वचित्स्थापयति) (अनन्तगरुडेन्द्रशंकरदेवाः, वारुणी, रुद्रा-

प्यैरावतोच्चैःश्रवोऽमृतांश्चप्सरः, कल्पक, कामधेनूः पत्नी, वाहन, शिरोभूषण, दास्यु,यानालंकार पशुत्वेन परिगृह्णन्ति)

**विष्णुः**—(पाञ्चजन्यंश्रीवत्सं कौस्तुभान्, आयुध चिह्न हृदयभूषणत्वेन परिगृह्य, लक्ष्मीं वीक्ष्य सहर्षं) (जनान्तिकं) हृदयवल्लभे, कथं एतावदनुभूतं त्वद्वियोगदुःखं इतः परमपि शक्यं सोढुम् ?

**लक्ष्मीः**—(जनान्तिकं) णाहं, एदाणं देवासुराणं अमिदप्पदाणसमअम्मि आअदा तुह पाणिं गहिस्सं। दाणिं एदेवि मं परिगहीदुं अहिळासिदा हवे, ता अहुणा पओाणाह एव्व गच्छम्मि।

**छाया**—नाथ, एतेषां देवासुराणां अमृतप्रदानसमये आगता तव पाणि ग्रहीष्यामि। इदानीं एतेऽपि मां परिग्रहीतुं अभिलाषिता (षन्ता) भवेयुः। तस्मात् अधुना पयोनिधिमेव गच्छामि।

(इति निष्कान्ता)

**विष्णुः**—(देवासुरान् वीक्ष्य) भो देवासुराः, सुप्रक्षाळितपाणिपादैस्स्वाचान्तैरेवामृतं पातव्यम्। तद्गच्छामः।

(इति निष्क्रान्ताः सर्वे)

इति लक्ष्मीकल्याणनामक समवाकाररूपके

प्रथमोऽङ्कः समाप्तिमगात्

# अथ द्वितीयोऽङ्कः

(ततः प्रविशति भगवान्सुदर्शनः)

**सुदर्शनः**—अहो, मुरमर्दनस्य वाचामगोचरो विक्रममहिमा। यत्, सर्वलोकशरण्यस्य, लक्ष्मीसहायस्य, तत्तत्समयेषु दुष्टनिग्रह-शिष्टपरिपालनाय(र्थं) कृतावतरणस्य, अजहत्कल्याणगुणगणस्य अतिमानुषचित्रचेष्टितस्य नारायणस्य दिव्याज्ञयाऽहमपि तत्त-त्कालोचितशरीरं वहन् तत्कैंकर्यैकरतिः, आसुरप्रकृतिनिग्रहा-दिकरणेन तत्प्रीतिमावहन् वर्ते। इदानीं तु क्षीरसागरस्थ-स्वप्रियाप्राप्त्यै स्वाश्रिता (तेभ्योऽ) मृतप्रदानाय क्षीरसागरोद्भूत-कालकूटविषावलोकनेन पलायितान् सुरासुरान् कारयित्वा, करिष्यमाणमोहिन्यवतारस्य भगवान् सैंह्निकेयछेदनार्थं त्वमपि दर्विरूपी भवेति मामप्याज्ञप्तवान्। (पुरो वीक्ष्य) कथमित एव आगच्छन्ति विष्णुशंकरेन्द्रादयः. देवासुराश्च। तद्यथानि-देशमाचरामि।

(इति निष्क्रान्तः)

(शुद्धविष्कंभः)

(ततः प्रविशन्ति विष्णुशंकरेन्द्रादयो देवा असुराः सर्वे च)

**पूर्वोक्ताः**—(सहर्षाहमहमिकं ब्रह्मादीन् वीक्ष्य) कुत्रामृतं कुत्रामृतम्?

**ब्रह्मा**—(अपवार्य) किं चिरायति प्रलयाग्निनिभः कालकूटविषा-धिदेवः?

(प्रविश्य)

**कालकूटः**—स्वाग्निना निर्दहन्, कोऽस्मत्स्वीकारी?

**सर्वे**—(कालकूटं वीक्ष्य, सभयकंपगद्गदं)

कूपं खनद्भिरस्माभिः भूत उत्पादितः किमु।
निर्दग्धुमागतः किं वा कालाग्निर्बडबानलः॥ ३८॥

इति भयजनितमोहेन मुहूर्तं स्थित्वा सभयतरलेक्षणं; समागच्छत, समागच्छत। कान्दिशीका यथाप्राणं जीवामः। माऽमृताभिलाषा। (इति विद्रवन्ति)

**शंकरः**—सर्वान्वीक्ष्य,

त्यजत भयममुष्मान्नित्यमेवातिभीताः
शशवदमरदैत्या हेत्वभावेऽपि यूयम्।
विषमिदमतितीक्ष्णं कालकूटाभिधं त्व-
द्भयहर इह पास्याम्येतदेवाहमुग्रम् ॥ ३९ ॥

(इति पश्यतां सर्वेषां पुरतो विषं पीत्वा नीलकण्ठो भवति)

**इन्द्रः**—(अमृतघटं गृहीत्वा, आत्मगतं) अस्मदीया एवैतदमृतपानेन वीर्यसंपन्नाः दानवजेतारश्च भवन्तु। तदमरावतीमेव नयामि। (इति ब्रह्माविष्णुशंकरदेवसंघैस्सह निष्क्रान्तः)

**असुराः**—(सासूयकोपाटोपं)

भो भोः पश्यत नित्यभीतहृदयैरिन्द्रादिदेवैः कृतं
छद्मैतन्नमुचे, हिरण्यकशिपो, भो कालनेमे प्रभो।
ते सर्वेऽपि वयं च दिव्यममृतं पीत्वा भवेमामरा
इत्यस्मत्सुविनिश्चितं तदधुना जेष्याम गत्वा बुधान् ॥ ४० ॥

यद्यमरावती अस्मदधीना, तदाऽमृतमपि हस्तगतं भवेत्। तद्यामः।

(इति निष्क्रान्ताः सर्वे)

इति लक्ष्मीकल्याणे द्वितीयोऽङ्कः समाप्तः

# अथ तृतीयोऽङ्कः

(नेपथ्ये)

रक्ष ब्रह्मागिरीशमौलिमकुटीकोटीरकोटीमाणि-
श्रीनीराजितपादपंकज, भवत्पादौ प्रपन्नाः सुराः।
मुह्यामो वयमद्य दैत्यनिवहैर्नाकाधिपोनिर्जित
स्स्वीकृत्याप्यमरावतीममृतसंप्राप्तये हरे श्रीपते ॥ ४१ ॥

(ततः प्रविशति विष्णुः)

**विष्णुः**—न भेतव्यं न भेतव्यम्।

(प्रविश्य)

**देवाः**—पुनस्तथैव पठित्वा मुह्यन्ति।

**विष्णुः**—समाश्वासयति। (प्रविश्यासुराः)

**असुराः**—रे रे देवाः, युष्माकमिदानीं पलायनमेव युक्तम्।

**देवाः**—(समाश्वस्य) असुरान्वीक्ष्य धावन्ति।

**विष्णुः**—(देवासुरान्वीक्ष्य)

युष्माकममृतं दातुं मयि तिष्ठति मध्यगे।
कथं देवासुरा यूयं युध्यध्वे जातसंभ्रमाः ॥ ४२ ॥

**असुराः**—(सहर्षं) विष्णुं वीक्ष्य उभयोरपि शीघ्रं दातव्यं; भो भो देवास्समागच्छत।

**विष्णुः**—(आत्मगतं) अद्यैवास्मत्प्रिया क्षीराब्धिजा ममासुरमोहजनक मोहिनीरूपधरस्य सखीत्वेनागता अमृतदानानंतरं मत्पाणिमपि परिग्रहीष्यति पूर्वमेवाज्ञप्तस्सुदर्शनो हेतिराजोऽपि असुरसंहरणार्थं दर्वीरूपी भूत्वा मां प्रतीक्षमाणो वर्तते इति ज्ञायते। (प्रकाशं) देवासुरान्वक्ष्य, एकत्र देवाः, अन्यत्रासुराश्च पंक्तिशः उपवेष्टव्याः; अहं तु अमृतघटं गृहीत्वा यावदागच्छामि (इति निष्क्रान्ताः)

**देवासुराः**—(पुरो वीक्ष्य,) कैषाऽस्मद्दृष्टिचित्तापहारिरूपसौन्दर्यशालिनी स्वसदृशया (श्या) कयाचित् प्रदर्शितमार्गा अमृतघटदर्वीकरा सर्वानपि मोहयन्ती मोहिनी इत एवागच्छति।

(ततः प्रविशति मोहिनी मार्गप्रदर्शिनी सखी च)

**सखी**—इदो इदो देवी। **छाया**—इत इतो देवी।

**मोहिनी**—सहि लच्छी, देवासुराणं अमिदं दाउं आअदाएमह, कुथ्थ कोको उवविट्ठोत्ति तुए दंसणिज्जो। **छाया**—सखि, लक्ष्मीः देवासुराणां अमृतं दातुं आगतस्य मम कुत्र कस्क उपविष्ट इति दर्शनीयः।

**लक्ष्मीः**—तहा। **छाया**—तथा।

(इति प्रथमं देवानेव दर्शयति)

**मोहिनी**—देवानाममृतं ददाति।

**असुराः**—(जनान्तिकं)

अन्यां ससर्ज स्त्रीरत्नसृष्टिं लोके पितामहः।
लोकमातुर्महालक्ष्म्या मूर्तिरेषाऽपराऽथवा ॥ ४३ ॥
तत् वयमेवैतत्स्त्रीरत्नद्वयमपि अवसरे ग्रहीष्यामः।

(इति लक्ष्मीमोहिन्यपहृतचित्ताः त एव पश्यन्ति)

**चन्द्रसूर्यौ**—(अपवार्य) अयमसुरो राहुः। (इति दृष्टिसंज्ञया लक्ष्म्यै दर्शयतः)

**लक्ष्मीः**—अअं असुरो राहू। **छाया**—अयमसुरो राहुः।

**मोहिनी**—(जनान्तिकं) असुरो मज्झंमि कहं? विबुहाणं भादि सिंहिआउत्तो। णक्खत्ताणं मध्ये असुहं विअ धूमएदुभंस्तं ता एदस्स उत्तमंगच्छेदणं एव्व जोग्गं।

**छाया**—

असुरो मध्ये कथं? विबुधानां भाति सिंहिकापुत्रः।

नक्षत्राणां मध्ये अशुभमिव धूमकेतुमं रक्तम् ॥ ४४ ॥

तस्मादस्योत्तमाङ्गच्छेदनमेव योग्यम् । (इति सुदर्शनदर्व्या सैंहिकेयकण्ठं ताडयति)

**असुराः**—सावधानं वीक्ष्य, अहो विष्णुरेवायं मोहिनीरूपोऽस्मत्संहरणार्थं आगतः । तदिदानीं अस्माकं पलायनमेव युक्तम् । (इति सत्वरमुत्थाय निष्क्रान्ताः)

**मोहिनी**—(सानन्दं, क्षणेन शंखचक्राद्यायुधधरो विष्णुर्भूत्वा, बृहस्पतिं वीक्ष्य) इतः परं भवदायत्त एव कार्यशेषः ।

**बृहस्पतिः**—(देवान् वीक्ष्य) भो भो देवाः, किं चिरायति क्षीरसागरः ?

(प्रविश्य)

**क्षीरसागरः**—दासोऽहम् ।

**बृहस्पतिः**—वैवाहिकमंगलालंकृता लक्ष्मीरानेतव्या ।

**चन्द्रः**—(तथेति लक्ष्म्या सह निष्क्रम्य, पुनः प्रविश्य) इयमस्मद्भगिनी वैवाहिकालङ्कारपरिष्कृताऽऽनीता ।

**क्षीरसागरः**—(विष्णुं वीक्ष्य)

इयं लक्ष्मीर्मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ४५ ॥

(इति धारापुरःसरं ददाति)

**विष्णुः**—(स्वीकृत्य सानन्दं)

यदा क्षीरांबुधिं याता सेयं तत्प्रभृति श्रमः ।
महान् मयाऽनुभूतोऽद्य सफलो मे मनोरथः ॥ ४६ ॥

**क्षीरसागरः**—

अहो भाग्यमहो भाग्यं श्रीस्सुतामेऽनपायिनी ।
जामाता विष्णुरेवाभून्न धन्योऽन्योऽस्ति मां विना ॥ ४७ ॥

देवाः—(विष्णुं वीक्ष्य, सहर्षप्रणामाञ्जलिबन्धं)

अमृतं पीतमस्माभिः प्राप्ताश्चैवाप्सरोमुखाः ।
भवतापि प्रिया लब्धा श्रीः कल्याणगुणान्विता ॥ ४८ ॥

बृहस्पतिः—किं ? युष्माकं भूयः प्रियमुपहरामि ? तथापीयमस्तु भरतभारती—

भूसुरसत्कर्मश्रीरपि सस्यश्रीः समधतां भूमौ ।
काले वर्षतु मघवा पातां शेषाद्रिदेवनाथौ माम् ॥ ४९ ॥

(इति निष्क्रान्तास्सर्वे)

इति लक्ष्मीकल्याणे तृतीयोऽङ्कः समाप्तः

इति श्रीशैलसार्वभौमवर्ति वंशमुक्ताफल श्रीमद्वराहार्यतनयेन श्रीमच्छ्रीनिवास-
महादेशिकसंयमीन्द्रपदांबुजाश्रितेन, दशविधरूपककर्त्रा पेत्तांयाळ-
ग्रहारवासेन रामानुजकविना विरचितं समुद्रमथनापराभिधानं
श्री लक्ष्मीकल्याणं नाम समवाकाररूपकं
समाप्तिमगात् । शुभं भूयात् ॥

॥ श्रीः ॥

# सुवर्णपल्लवगुंभिततोरणमालाबन्धः, मुरजबन्धः, सुधांशुबन्धः, स्तवचतुष्टयं, दण्डकपञ्चकं, गद्यमेकं च

श्रीमन्महाराज संस्कृत महापाठशालास्थ शारदा भांडागारीय

निवृत्त प्रधान विदुषा

तिरुमले सत्यागालं

श्री नि वा स दे शि का चा र्ये ण

विरचितं



मैसूरु

राजकीय शाखामुद्रायन्त्रालये सम्मुद्रितं च विजयतेतराम्

१९५४

## विषयानुक्रमणिका

## प्रस्तावना

वाचकमहाशयेषु विज्ञप्तिः,

एतत्त्रैमासिकपत्रिकायां प्रकाशित त्रयोदशसंदर्भेषु कल्याण-तोरणबन्धोऽयं प्राक्तन चित्रकाव्यशैलीमनुसृत्य लेखकोत्प्रेक्षा-रूपो निबद्धः। इतर मुरजसुधांशुबन्धौ प्रत्नकविसंप्रदायानुसारेणैव निर्गुंभितौ—उदाहृत बन्धत्रय चित्रसाधनानुपलंभात् बन्धगति-क्रमाः—संख्यासहकारेण दिङ्मात्रं प्रदर्शिताः।

अत्र प्रकाशित उद्दिष्टवर्ण ग्रहणाख्य संदर्भः स्वनाम्नाख्यात-प्राचीन भारतेय विद्वत्सामाजिक बालक्रीडाविशेषः। एतत् कौतुक-रसानुभवः अनेन लेखकेन उद्दिष्ट वर्णग्राहक पद्यषट्केन सांगो-पाङ्गं समुत्तंभितः। कौतुकेऽस्मिन्-उद्देष्टव्यवर्णाः ककारादि क्षकारान्त चतुस्त्रिंशत्संख्यापरिमित मातृकाक्षराणि। तानि पद्य-षट्केऽस्मिन् आवापोद्वापगतिक्रमानुसारेण गुंभितानि।

एवंभूत—पद्यषट्कस्थोद्दिष्टवर्णानां ग्रहणाय प्रस्थानद्वय-मत्र कल्पितं। एकं घटकपद्यसहकारेण। अन्यत्तु—उद्दिष्टवर्ण-ग्राहक कोष्ठसहकारेण। एवंविधमार्गद्वयमपि उद्दिष्टवर्णग्राहक-पद्यषट्कस्याधस्तात् समुदंचितम्।

उक्त—पद्य षट्कं—कोष्ठसहायेन उद्दिष्ट वर्णग्रहण सौकर्यार्थं "ह - य - ग्री - व - ली - ला" इति वर्णषट्केन यथाक्रमं संकेतितम्।

तथा घटकपद्यस्य सहायेन उद्दिष्टवर्णग्रहणाय एक-द्वि-त्रि-चतु-रष्ट-षोडश संख्याभिश्च संकेतितं।

किंच;—उद्दिष्टवर्ण (घटित) घटकपद्येपि यथोक्त चतुस्त्रिंश-न्मातृकाक्षराणि गुम्भितानि।

उद्दिष्टवर्णग्राहकः वर्णोद्देष्टृमुखेन यस्मिन् यस्मिन् पद्ये उद्दिष्ट-वर्णः वर्तत इति विज्ञाय-तत्तत्पद्यपारिभाषिकसंख्याः—पारिभाषि-

काक्षराणिच-सङ्कलय्य—तत्पारिभाषिकसंख्या-कोष्ठ-पारिभाषिक-वर्णकोष्ठे च, तत्संख्याकवर्णान्-तद्वर्णकोष्ठ पार्श्वस्थवर्णांश्च—उद्दिष्ट-वर्णान् निश्चिनुयात् ।

आधुनिक गीर्वाण प्रबन्धलेखकेषु प्रायेण गद्यपद्यलेखका एव बहुळाः दण्डकलेखका विरळाः, एवमक्षुण्णसरणिमनुसृत्य-दण्डकपञ्चकमिदं सोद्धातं संदब्धं – अतः प्रास्थानिक प्रमोदास्स-हृदयैस्सोढव्याः । एवंभूतानुलोम विलोमस्तवेप्येषाऽभ्यर्थना सहृदयैस्समन्वेतव्या ।

विष्णुपदी—मुक्तपदं (मोक्षस्थानं) ग्राहयतीति श्रुतिस्मृत्यादौ बहुदोद्घुष्टं। एवंभूता विष्णुपदी मुक्तपदावलम्बन –त्यक्तपदा-दान मर्यादयास्तुतास्तवेऽस्मिन् ।

मुक्तपदावलम्बनस्तवेमुक्तपदग्रहणरीतिरियमपि –पद्यकाव्ये-प्रत्यग्रतरेत्यपरोक्षमिदं प्रेक्षावतामित्यलं विज्ञेषु विज्ञप्तिविस्तरेण ।

इति विज्ञापयिता—

सहृदयवशंवदः,

ति. स. श्रीनिवासदेशिकाचार्यः.

## १. * सुवर्णपल्लवगुम्भितस्यास्य तोरणमालाबन्धस्य मुद्रणसाधनानुपलम्भाद्दिङ्मात्रप्रदर्शनम्

1 2 3 4 5 10 11 12 13 14 15 16 17 18 19 20 21 22 23 24 25 26 27 28 29 30 31 32

श्री वा ग धी श दे व त्व म भ य प्र द मा म व अ स्य न न्त द या स क्ष र क्ष क स्त्वं स दा म म

मन् जि ळा ति स्य वा नौ या : व्या र ज्ञा त्ता न्य ते मां ज्ञ ज्ञा का त्वं याः प्रा प या म्या रा र हि म स्तु तिं म

### तोरणमालाबन्धप्रशंसा:

मतिप्रभु मनोमुख प्रवण मन्मनो मन्दिरे
स्फुरन्मणिगणान्वित प्रतिसुवर्णना † साग्रत
अयं हि चतुरानन प्रियतमामयस्तोरणः
‡ सुवर्णघृणिवर्षणो जयति वाक्पतिप्रीणनः

---

* समीचीनाक्षरमयपल्लवैः. † गृहद्वारोपरिस्थि (त) तिर्यग्दारुः, "नासादारूपरिस्थित" इत्यमरः. ‡ अक्षरघृणिः स्वर्णघृणिश्च.

## तोरणबन्धान्वितप्रथमपद्यम्

(1) श्री वागधीश देव त्व मभयप्रद मामव।
अस्यनन्त दयासद्म रक्षकस्त्वं सदामम॥

## प्रथमपद्यपूर्वार्धगर्भितद्वितीयपद्यम्

(2) श्री म न् वा जि ग ळा ऽ धी ति श स्य दे वा ऽ व नौ त्व या
म म भ व्या य सु प्र ज्ञा द त्ता मा न्य म ते व मां॥

## प्रथमपद्यस्य उत्तरार्धगर्भितं तृतीयपद्यम्

(3) अ ब्ज स्य ज्ञा न का न्त त्वं द या या: [1]प्रा स प द्म या।
इ म्या क्ष रा क र स्त्वं हि स म दा स्सु म तिं म म॥

[1] पौनःपुन्येन दयाकार्यकर्त्र्या लक्ष्म्या.

# २. मुरजबन्धः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| आ | ग | मा | ब्धि | क्ष | मा | र | त्नं | नि | ग | मा | श्वं | क्ष | मा | र | तम् |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 | 24 | 25 | 26 | 27 | 28 | 29 | 30 | 31 | 32 |
| तं | र | मा | क्ष | स्त्र | मा | लं | वे | धी | र | मा | ब्धि | क्षं | मा | ल | यम् |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1 | 10 | 11 | 28 | 29 | 19 | 18 | 8 |
| आ | ग | मा | ब्धि | क्ष | मा | र | त्नम् |
| 9 | 2 | 27 | 12 | 20 | 30 | 7 | 17 |
| त्रि | ग | मा | श्वं | क्ष | मा | र | तं |
| 16 | 26 | 3 | 13 | 21 | 6 | 31 | 24 |
| तं | र | मा | क्ष | स्व | मा | ल | म्बे |
| 25 | 15 | 14 | 4 | 5 | 22 | 23 | 32 |
| धी | र | मा | ब्धि | क्ष | मा | ल | यम |

## ३. सकलामयघ्नसुधांशुबन्धः

कलाजाला * चलापाला मलालीलाऽखिलं सला ।
† मेलानीलाबला मूलाशीला‡न्दोलाकिलाऽतुला ॥

### संख्याभिर्बन्धदिग्दर्शनम्

| | | | | | |
|---|---|---|---|---|---|
| क 31 | जा | च | पा | म | ली 13 |
| तु 29 | | 2_32 ला | | | खि 15 |
| कि | | | | | ंस |
| 27 | 25 | 23 | 21 | 19 | 17 |
| न्दो | शी | मू | ब | नी | मे |

---

## ४. उद्दिष्टवर्णग्रहणपद्यावलिः

### उद्दिष्टवर्णग्रहणसूत्रम्

ह य ग्री व ली ला 16

(ककारादि क्षकारान्त चतुस्त्रिंशद्धल् वर्णा उद्देष्टव्याः)

ह 1. सभासारमिळाधारं—क्षमास्वं—मधुमारणम् ।
वाणी सुधारसावास—मीडे—हयहरिं—विभुम् ॥ १ ॥

य 2. फणीश शंख शीतांशु रजताच्छो जिताशरः ।
झषेशाश्शरणं चारुचरित श्शेषतोषणः ॥ २ ॥

ग्री 3. दयाकार कळागार तात गीताझरीहृद ।
गोकुलेडित घोराघं घातयाऽघकुठार नः ॥ ३ ॥

---

* भूपाल. † मा–श्रीः इला–नीला श्रीभूनीलादेव्यः ‡ आन्दोलारूढपुरुषस्य आन्दोलिकेव शीलगुणाधारभूता.

व 4. श्रये खगरथं क्षीर झराकार मिळाचरम् ।
बोधामरं शठकटुं श्रीहयं धिषणेडितम् ॥ ४ ॥

ळी 8. वसवाज्ञाथ फालाक्ष धिषणेडित नः कुले ।
क्षर सारस्वत झरीं कळानाथोढ चारु नः ॥ ५ ॥

ला 16. छन्दसां केळिदाचार बहुद श्री झरीकर
सफलाक्षाऽशठश्रीद हयास्याऽसि श्रियासह ॥ ६ ॥

समा. 34.

## उद्दिष्टवर्णानां घटकपद्यम्

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10-11 | 12 | 13 | 14 | 15 | 16 | 17 |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| भ | जे | घो | टी | मु | ख | गा | ढं | वा | ज्ञा | थं | धि | ष | णे | डि | तम् । |

| 18 | 19 | 20 | 21 | 22 | 23 | 24 | 45 | 26 | 27-28 | 29 | 30 | 31 | 32 | 33 | 34 |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| छं | दो | बा | हुं | श | ठा | या | सं | फु | ल्ला | क्षं | च | क | ळा | झ | रम् |

### अथवा

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 |
|---|---|---|---|---|---|---|---|
| भ | जे | घो | टी | मु | खं | गा | ढं |
| 9 | 10-11 | 12 | 13 | 14 | 15 | 16 | 17 |
| वा | ज्ञा | थं | धि | ष | णे | डि | तं |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| छं | दो | बा | हुं | श | ठा | या | सं |
| 26 | 27-28 | 29 | 30 | 31 | 32 | 33 | 34 |
| फु | ल्ला | क्षं | च | क | ळा | झ | रं |

# उद्दिष्टवर्णग्राहककोष्ठाः

| घटकपद्यं | उद्दिष्टवर्णसंख्या | | | | | | |
|---|---|---|---|---|---|---|---|
| भ | 1 | ह | — | — | — | — | — |
| ज | 2 | य | — | — | — | — | — |
| घ | 3 | ग्री | — | — | — | — | — |
| ट | 4 | व | — | — | — | — | — |
| म | 5 | ह | व | — | — | — | — |
| ख | 6 | य | व | — | — | — | — |
| ग | 7 | ग्री | व | — | — | — | — |
| ढ | 8 | ली | — | — | — | — | — |
| व | 9 | ह | ली | — | — | — | — |
| ज | 10 | य | ली | — | — | — | — |
| न | 11 | ग्री | ली | — | — | — | — |
| थ | 12 | व | ली | — | — | — | — |
| ध | 13 | ह | व | ली | — | — | — |
| ष | 14 | य | व | ली | — | — | — |
| ण | 15 | ह | य | व | ली | — | — |
| ड | 16 | ह | ग्री | व | ली | — | — |
| त | 17 | य | ग्री | व | ली | — | — |
| छ | 18 | य | ला | — | — | — | — |
| द | 19 | ग्री | ला | — | — | — | — |
| ब | 20 | व | ला | — | — | — | — |
| ह | 21 | ह | व | ला | — | — | — |
| श | 22 | य | व | ला | — | — | — |
| ठ | 23 | ग्री | व | ला | — | — | — |
| य | 24 | ह | ग्री | व | ला | — | — |
| सं | 25 | ह | ली | ला | — | — | — |
| फ | 26 | य | ली | ला | — | — | — |

उद्दिष्टवर्णग्राहककोष्ठः

| कपद्यं | उद्दिष्टवर्णसंख्या | | | | | | |
|---|---|---|---|---|---|---|---|
| ऌ<br>ला | 27<br>28 | श्री | ली | ला | — | — | — |
| क्ष | 29 | ह | व | ली | ला | — | — |
| च | 30 | य | व | ली | ला | — | — |
| क | 31 | श्री | व | ली | ला | — | — |
| ळ | 32 | ह | श्री | व | ली | ला | — |
| झ | 33 | य | श्री | व | ली | ला | — |
| र | 34 | ह | य | श्री | व | ली | ला |

सत्यालयश्रीनिवासदेशिकाचार्यधीमता ।
कृता वागीशलीलेयं श्रीकृष्णांघ्रौ समर्पिता ॥

# ५. अथ श्रीमत्सन्तानगोपालस्तवः

अब्जगापक्षिफणिराड्बर्हभामामणीश्वरैः ।
सा[1] पवर्गं प्रपद्येऽहं मुकुन्दमपवर्गदम् ॥ १ ॥

## श्रीमत्संतानगोपालध्यानम्

वन्दे सन्तानगोपं करधृतमुरलीमुद्रिकारूढवेणुं
धेनुं पश्चात्सवत्सां निजपदकमलाघ्राणलोलां वहन्तम् ।
तिष्ठन्तं नम्रजानुद्वयमतिरुचिरं दक्षिणं पादमग्रे
वामाङ्घ्रेरुद्वहन्तं रथपदजलजारूढशिष्टद्विहस्तम् ॥ २ ॥

## यदुनाथाङ्घ्रिपद्मे शरणागतिः

श्रीमन् सन्तानगोप श्रितजनशरणं तावकाङ्घ्रिं प्रपद्ये
पद्माकान्ताय तुभ्यं नम इदमनघे मां नियुङ्क्ष्वाङ्घ्रिदास्ये ।
विश्लेषाश्लेषभावं गमय मम दयादास पूर्वोत्तराणां
सर्वेषामंहसां मे दिश पदकमलं चैतदङ्गावसाने ॥ ३ ॥

## भगवद्दिव्यमुरलीवर्णनम्

क्रीडावल्लववल्लभाधरसुधां तत्पाणिपाथोजयो-
र्मध्वीं तद्वदनानिलामृतझरीं चास्वादितुं नैककम् ।
पर्याप्तं वदनं ममेति हि सदा सुव्यावृतास्याष्टकं
वंशीमुत्तम[2]वंशजां शरणये कृष्णाधरप्रेयसीम् ॥ ४ ॥
[3] सद्वंशप्रभवे सुवृत्तरुचिरे कृष्णाधरप्रेयसि
त्वष्टृस्वर्णसवर्णगात्रलतिके कर्णामृतोद्वर्षिणि ।
व्यक्ते मत्पुरतो हरौ जननि मे प्राणप्रयाणक्षणे
त्वद्गीतं विशतु श्रुतिं मुरळि तन्निर्वाण (मन्निर्याण) कर्णामृतम् ॥

[1] अश्च पवर्गश्च अपवर्गौ ताभ्यां सह वर्तत इति सापवर्गः तं सापवर्गं अकारेण, पादिपञ्चाक्षर(रीरूप)प्रथमवर्णविशिष्टपदषट्कविशेषणैश्चालङ्कृतं मुकुन्दमित्येकोऽर्थः इतरार्थस्तु स्पष्ट . [2] उत्तमवेणुपर्वजां, सत्कुलप्रसूतां च. [3] वेणुपक्षे—वल्लभापक्षे च एतेषां पञ्च(ञ्चानां)विशेषणानां यथार्हं समन्वयः.

नादब्रह्मसुधाप्रवाहकणिकासङ्गेन बृन्दावने
सद्यः पल्लविताः फलैः सुभरिताः शाखाशतैस्सङ्कुलाः ।
चक्रे या मुरली मुकुन्दमहिला स्थूणावळी (ली) नीरसाः
सा कर्णे मम गायनामृतझरीमातश्नुयेदात्मनः ॥ ६ ॥
वन्दे वंशीं मुरारेरधरसहचरीमात्मवंशैकलोलां
यस्या गानामृतौघो विपिनहुतभुजा दग्धमात्मान्ववायम् ।
पीतस्फीतैः करीरैः परिवृतमतनोत्पर्वभिश्चातिरम्यैः
ख्यातिश्चेदग्निना किन्त्विति कविवचनं सापवादं यथाभूत् ॥ ७ ॥

यदुनाथकरुणाकटाक्षवर्णनम्

नव[1] नन्दनवनमवनोर्बृन्दारण्यं हि नन्दनन्दन स्वदृशा ।
अनुलोमयति विलोमानविषममाख्येव ते हि शुभवीक्षा ॥ ८ ॥
वन्दे वल्लवदेव (इ) मित्यभिगृणन्नत्वां (सं)श्रये वल्लवं
वैषम्यं त्वयि नाम्नि ते च न विलोमेवानुलोमे यथा ।
सेयं मन्नतिवागपि त्वयि तथा भूयात्तव प्रीतये
गोपालैस्सह सन्ततं यदुकुले चित्रोक्तिलीलाजुषः ॥ ९ ॥

भगवदवतारप्रयोजनवर्णनम्

गोप्तुं धर्मं, विधातुं दिविषदुपकृतिं, रक्षितुं साधुलोकं
संहर्तुं दैत्यवंशं, रमयितुमखिलानात्मभक्तान् प्रपन्नान् ।
जातं वंशे यदूनामतितरसुलभं निस्समानापदानं
वेलातीतानुभावं शरणयदुपतिं संश्रये दीनबन्धुम् ॥ १० ॥

गीताशास्त्रप्रदानोपकारवर्णनम्

धर्मस्थेमानभिज्ञं स्वजनपरमपार्थोक्तिमावर्तयन्तं
पार्थं स्वाङ्घ्रिप्रपन्नं विमुखमुपनते सङ्गरे क्षत्रधर्मे ।
उद्दिश्य त्यक्तशास्त्रं भुवनहितकृते गीतमध्यात्मशास्त्रं
येन द्राक्षासदृक्षं प्रथमगुरुमहं नन्दसूनुं प्रपद्ये ॥ ११ ॥
अनर्जुनवलाहकप्रतिमवर्णमीडे हरिं
नतार्जुनमनर्जुनं भविकसङ्गगोपक्रमं ।

[1] "नन्दनन्दन" "नवनन्दनवन" शब्दप्रकृत्योरनुलोमविलोमभावे वैषम्यं नीत्यभिसन्धिः.

निजोक्तिसुधयार्जुनं नृपतिधर्मयुद्धोन्मुखं
विधाय विदधेऽर्जुनानखिलचेतनान्यो.भुवि ॥ १२ ॥
नाथमेकं प्रपद्येऽहं नाथ यस्मात्परो गुरुः ।
यो मामेकं व्रजेत्याह यत्प्रदानेऽस्ति नाथवाक् ॥ १३ ॥
गीतामृतसुधावर्षिकृष्णमेघो मुदेऽस्तु नः ।
यश्शाश्वतं फलं दुग्धे विहाय कृषकश्रमम् ॥ १४ ॥
अशेषद्वापरान्ताय द्वापरान्ते भुवं गतम् ।
अर्जुन्यर्जुनजीवातुगीतोद्धर्षि श्रये महः ॥ १५ ॥

भगवद्धेनुवर्णनम्

वन्दे धेनुं सवत्सां मुरहरमुरळीगोपपृष्ठान्वितां तां
तत्पादाघ्राणसिद्धान्तितपरतरतद्ब्रह्मसर्वप्रकाराम् ।
साङ्गाम्नायाः पुराणान्यखिलमुनिगिरो भक्तगाथाश्च यस्याः
निष्कर्षाब्धौ निलीनाः [1] विपुलहरिपदे खर्वमूर्तैरिवाङ्घ्रिः [2] ॥ १६ ॥
पृथुलकुचयुगं ते यादवेन्द्रोपहर्तुं
समुदमुपगतास्मीत्यालपन्त्यास्तरुण्याः ।
लकुचयुगमगृह्णन् यः कुचावभ्यगृह्णा-
त्स दिशतु कुशलं वो धूर्तधुर्यो मुकुन्दः ॥ १७ ॥

द्रौपदीशरणागतिवर्णनम्

वन्दे क्रीडाकुविन्दं पटजनिधृतिभूयस्य कृष्णाशुभाङ्गं
तच्चाभूद्धस्तिनायां नृपसदसि स तु द्वारवत्यां कुविन्दः ।
सृष्टिस्सङ्कल्पमात्रात्त्रुटिमितसमये वीतमङ्ख्यांशुकानां
दिव्यानां निस्समानामभिनवरुचिरासङ्ख्यचित्रोज्ज्वलानाम् ॥ १८ ॥
पाञ्चाल्यास्तन्तुवायो द्रुपदनृपसुताक्षेत्रकृष्णापुरीन्द्रः
नाम्ना सन्तानगोपो जयति विनमतां पुत्ररत्नानि वर्षन् ।
यः कल्पान्ते प्रलीनान् स्ववपुषि पिहितस्वप्रकाशांश्चिदंशान्
संवृण्वन् चित्रनानाविधतनुवसनैः पाति कृष्णामिवार्ताम् ॥ १९ ॥
श्रीमान्मायाकुविन्दो वसतु मम मनोधाम्नि कृष्णाहृदिस्थः
पण्यं यस्यांशुकानां व्यसनहतिरभूत्तादृशी याज्ञसेन्याः ।

---

[1] त्रिविक्रमाङ्घ्रौ.  [2] वामनभगवदङ्घ्रिरिव.

यस्याश्शोकोक्तिगाथाक्षरततिविभवो येन सृष्टांशुकानां
वीतार्घाणां हि तन्तुप्रकरकृतितुरीवर्णवेमादिकानि ॥ २० ॥

यदुनाथकृपोत्कर्षवर्णनम्

भूमावत्रावतर्तुं भजति रुचिलवं पद्मनाभे ततः प्राक्
आविर्भूतामुदारां यदुपतिकरुणां तां प्रपद्ये शरण्याम् ।
सप्तेः प्रादुर्बुभूषोः प्रथमसमुदयो यद्दयोत्कर्ष(त्कृष्ट)तायाः
श्रुत्याम्नातस्तमद्य स्मरति मम मनः पश्यतो जन्म यस्याः ॥ २१ ॥
हेयं संसारबन्धं श्लथयितुमिह नस्तुन्ददेशात्तबन्धं
मातुर्गर्भप्रवेशं क्षपयितुमवनौ देवकीगर्भगूढम् ।
मग्नानुद्धर्तुमस्माव्यसनजलनिधेस्स्वीकृतात्मावतारं
पाञ्चालीक्षेत्रनाथं यज हृदय हरिं मुञ्च लौल्यं जिहास्ये ॥ २२ ॥

कविनामगुप्तिपद्यम्

[1] सद्भोग्यं त्यागशीलं ललितशुभगिरा यन्त्रिनं श्रीक्ष(श)माद्यं
नित्यं वाणीशवन्द्यं सहसितवदनं देवनाथं शिवेड्यम् ।
कञ्जाक्षं दासभोग्यं सदयसुहृदयं कृष्णसंज्ञं तमाल-
श्यामं वन्देऽत्र पद्ये प्रतिपदपठिताद्यक्षराह्वः कवीन्द्रः ॥ २३ ॥

श्रीमत्सन्तानगोपालवर्णनम्

अग्नेराप इति श्रुतं श्रुतिपथे गोपाल तद्गोकुले
गोपीगोपतदर्भकैरपि समं साक्षात्कृतं चक्षुषा ।
मृत्स्नाभक्षणरुष्टगोपरमणीप्रमप्रहारोत्सवे
यत्ते तैजसलोचनाद्विजगलुमुक्ताप्रभाम्भःकणाः ॥ २४ ॥
दाम्ना बद्धोऽस्मि तुन्दे विविधशुभगुणैश्चेङ्कितुं वास्म्यशक्तः
चक्राब्जाभ्यामवन्यां युधिहतरिपवोऽप्यापुरेवं मदङ्घ्रिम् ।
अस्मिन्नीषन्नतं वः फलति किमु शिरस्सम्पदं पश्यतेति
व्याख्यास्यन्तीव भान्त्यः फणिगिरिकमितुः पान्तु नः पाणिमुद्राः ॥
॥ २५ ॥

अधरनिहितवंशीगाननादैकलोलं
मकुटनिकटरिङ्गद्बर्हिबर्हाग्रजालम् ।

[1] अत्र पद्ये अधस्स्तर्यग्रेखाङ्कितान्यक्षराणि कविनामवाचकानि.

वलभिदुपलनीलं बाललीलात्तशैलं
विशतु नयनगोलं धाम तन्नः सुशीलम् ॥ २६ ॥

## पूर्वाचार्याणां मङ्गलाशासनवर्णनम्

श्रीमद्योगीन्द्ररामावरजकलिहरैस्तत्पदाब्जप्ररूढै-
रन्यैर्योगीन्द्रपादैः कनकनगकुलाम्भोधिराकाशशाङ्कैः ।
श्रीमच्छ्रीवाससद्देशिकगुरुचरणाद्यैश्च संप्राप्तभव्या-
शास्तिः पायाद्धरित्रीं यदुपतिरनिशं याज्ञसेनीपुरीन्द्रः ॥ २७ ॥
क्षोणीशूराभिधानप्रथितवरपुरे शारदारङ्गभूमौ
यद्वद्रेस्सन्निकर्षे किटिहरिनिलये वागधीशाङ्घ्रिहृद्ये ।
क्लृप्ता शेषाद्रिसत्यालयकुलजरमावाससद्देशिकेन
श्रीमत्सन्तानगोपस्तुतिरियमखिलास्सम्पदो दोग्धि गातुः ॥ २८ ॥

इति श्रीशैल सत्यनिलय श्रीनिवासदेशिकदासकृतिषु
श्रीमत्सन्तानगोपालस्तवः सम्पूर्णः

# ६. श्रीमत्सन्तानगोपालगद्यम्

जय जय नन्दबाल, श्रीमत्सन्तानगोपाल, वेणुगानामृतवर्षिकृष्णमेघ, अखण्डज्ञानानन्दमयरूपस्वरूपगुणविग्रहायुधयोषाविभूतियुगळमनोहर, श्रीजयन्तीशुभसमयकलितनवमावतार, वैजयन्तीविभूषितविशालवक्षःस्थल, याज्ञसेनीपुराग्रहारनिकटगतकनकापगाकूलालवालप्ररूढभौमपारिजात, सकलभक्तलोकलोचनासेचनकवैकुण्ठभोग्यरसायन, कन्दर्पकोटिसुन्दरसुकुमारस्वाकारलावण्य, शृङ्गारभूमिकारूढपरभक्तिपरज्ञानपरमाकृत, परिगृहीतयोषिद्भावमुनिमण्डलप्रापितस्वसंश्लेषरूपदिव्यसमाधियोग, 'सकलचेतनजालशुद्धान्तभूतपुरुषोत्तम, निजावतारसमयप्रकाशितशङ्खचक्राद्यलङ्कृतकारणाकार, मधुरानगरकारागारसमारोपितसहस्ररत्नदीप, देवकीगर्भपयःपारावारशरद्राकासुधाकर, जननीजनकनिगळनिर्मोचनचरितश्रवणविमोचितदुर्मोचसंसारबन्ध, अखिलविविधनिजापदाननिर्धारितस्वावताररहस्य, स्वनवमावतार—प्रभावचुलकितनिजान्यावतारप्रभाव, मसृणशशिकरशिशिरकरुणा—कटाक्षस्पर्शलेशपल्लवितफलितपुष्पितविविधतरुलताहृद्यमृग्यबृन्दशूक—बृन्दावन, आतपत्रीकृतगोवर्धनगोत्र, वलभिदुपलमणिदण्डायमानभुजदण्ड, शतप्रकारशातितसमन्युशतमन्युगर्वपर्वसर्वांश, निजगळगतपूतनास्तन्यगरळमारितमायापूतन, पूतनामन्, नन्दपोत, निकटागतविकटशकट[1]शताङ्गपाटन, तृणीकृततृणावर्तवर्तन, धेनुकासुरचाणूरमुष्टिकवृषभबाणसृगालनरकपौण्ड्रकहंसडिम्भकसाल्वाग्निरुद्राभिषेक मृन्मयकंसभाजनध्वंससमानित (समानीकृत) मल्लयुद्धोपनतकंसघातन, अपराद्धशिशुपालतूलाचलकालानल, स्वकरविनिहतसकलपूर्वदेवविश्राणितमोक्षसाम्राज्य, स्वजनाधिककारुण्यभाजनीकृतशात्रवान्वय, जघन्यजनसन्दर्शितनिरतिशयपक्षपात, अष्टोत्तरशतवैकुण्ठधामनित्योत्सवपक्षोत्सवसंवत्सरोत्सवभोगविस्मृतप्रथमतमवैकुण्ठदेश, भावोपहारहेमाचल, रिक्ताञ्जलिमात्रपरतन्त्र, लघुनतिप्रतिफलीकृतस्वात्मान्तदानमहोदार, भक्तिविकलहेमाचलकल्पराजोपचारपराङ्मुख, विदुराक्रूरमालाकारादिभक्तप्रपञ्चदहरपुष्करनिकरप्राभातिकभास्कर, अविद्याकालरात्रिसुप्र-

[1] शकटासुरभञ्जक.

भातायितगीतामृतवर्षिभीमकालाम्बुद, यदृच्छासमुपनतक्षत्रभाग्यसमर-पराङ्मुखमहावीरार्जुनकराग्रताण्डवितगाण्डीवचाप, समराङ्गणसमुदञ्चितसत्सम्प्रदायपरम्परागतयोगशास्त्रसंजीवितनष्टप्रायात्मप्रपञ्च, निजपदाम्भोजयुगळसमर्पितस्वरक्षाभरसकलात्मसंरक्षणैकव्रत, उलूखलबन्धमहोत्सवक्षणसन्दर्शितनिजपारतन्त्र्यपरकाष्ठ, दामनियन्त्रितबकुळाभरणमुनिग्राहितषण्मासावधिकदिव्यसमाधिगम्यरम्यदामोदर, हृद्यबार्हिबर्हावतंसस्निग्धकुटिलकृष्णकुन्तलशतगुणितहसन्मुखारविन्दसौन्दर्य, मकरकेतुकेतनयुगळायमानमकरकुण्डलालीढसमुत्तुङ्गस्कन्धयुगळव्या—ख्यातपुरुषोत्तमभाव, षोडशसहस्रपरिमितशुद्धान्तःकरणशुद्धान्तमहिळामण्डलनिर्धारितशुद्धान्तःपुरसिद्धान्तविजयध्वज, रूपस्वरूपगुणप्रमुखसकलांशधौतरुक्मवर्णललनाशिरोमणिरुक्मिणीप्राणवल्लभ, निजपुरः—पाणिपद्मयुग्मनिगळितमुरळीमुखपङ्क्तिनिस्सृतगानामृतास्वादसंतृप्तबा--लाहिगोगोपीगोपान्तप्रपञ्च, तदितरकरकमलयुगळसमलङ्कृतसुन्दरसुदर्शनपाञ्चजन्य, पश्चात्कायोपधानीकृतसतर्णकधेनुसमाघ्रातालीढपादपद्ममकरन्द, तत्समाघ्राणनिर्धारितनिजपरब्रह्मभाव, अतिरुचिरनिजतिष्ठद्रूपलग्नभक्तलोकलोचनग्राहितानिर्निमेषभाव, विद्रुत्सभार्जितनीललीलाकलाञ्चिभाजनयुगळसभाजितनम्रजानुयुगळसौभाग्य, वामपादाब्जाग्रविन्यस्तदक्षिणाङ्घ्रिपद्माभिराम, श्रीमद्याज्ञसेनीपुराग्रहार[1]मुक्ताहारभूतपरमभागवतदिव्यभागधेय, सकललोकैकनाथ, नाथायैव नमः पदमित्यस्मद्देशिकघण्टांशदिव्यसूक्त्यैवकारनिर्धारितनिरतिशयोत्कर्ष, अनन्यशरणकृपणसकलभूतव्रातशरण्य, प्रपित्सुसन्तानमुक्तिसाम्राज्यकूकुद, अभयप्रदानवाणीसञ्जीवितभीतभूतजात, निरतिशयवरेण्यप्रत्यंशसर्वांश, श्रीमन्नाथान्वयनित्यभोग्यनिरवधिकनित्यनिरवद्यनिक्षेप, श्रीमत्सन्तानगोपाल, त्वत्पादारविन्दयुगळं शरणमहं प्रपद्ये ॥

सत्यसद्मरमावासदेशिकेन हरेर्मुदे ।
क्लृप्तं पठत गोपालगद्यं हृद्यमभीष्टदम् ॥

इति श्रीशैल सत्यनिलय श्रीनिवासदेशिककृतिषु श्रीमत्सन्तानगोपालगद्यं सम्पूर्णम्

---

[1] मौक्तिकहारभूताः महर्षिभूताश्च । द्वितीययोजनायां मुक्तः आहारो यैस्ते इति विग्रहः.

# श्रीरामापदानसुधाझरीदण्डकम्

सुमुखं परमं वस्तु रामाख्यं हृदयेऽस्तु मे।
वैषम्यं यन्मुखं नाऽवैद्राज्याभिवनवासयोः॥ १॥

सीताविद्युत्प्रकाशो हरिपदरुचिरश्श्राव्यगम्भीरनाद-
स्संतापघ्नः प्रजानामसिततनुरुचिर्दिव्यकोदण्डरम्यः।
जीमूताम्बुव्रतिष्ठद्विजकुलशरणं जीवनं संप्रदत्ता-
मस्माकं चित्रकूटक्षितिधरनिलयो रामभद्राम्बुवाहः॥ २॥

जयजय जय श्रीजानकीलोचनद्वन्द्वनीलोत्पलोल्लासिपीयूषभासांनिधे, रामचन्द्र प्रसीद -प्रपन्नानुकम्पिन्, विपन्नार्तिहारिन्, कृपाजालकल्लोलिनीनाथ, देवाधिनाथार्थनाप्राप्तमायामनुष्यावतार, प्रवीर त्वमादौ-सरोजातजातादिगीर्वाणसङ्घातसंप्रार्थितः—पङ्क्तिकण्ठादिदोषाचरौघ—प्रघाताय जातः—पयोजातबन्धोः—कुले रामवेषेण, बाल्योचितामूल्यमुक्ताकलापेन, -गाङ्गेयभूषाविशेषेण, शेषेण च भ्रातृवेषेण, सौमित्रिणा सङ्गतः पौरवीथीविहारं वितन्वन्, पितुर्मोदमापादयन्, नीचमारीचमाया-परित्रस्तगाधेयसत्रावनं कर्तुमुद्युक्त एव प्रचण्डाट्टहासावरुद्धार्कसद्घोटकां पादधूळीसमाक्रान्तकान्तारशृङ्गाटकां, ताटकां पाटयित्वैकेन बाणेन तत्कर्महृष्यन्मुनीन्द्रात्तदिव्यास्त्रसङ्घः- समासाद्य सिद्धाश्रमं—तत्र सत्रं विनिघ्नन्तमत्युद्भटारावमभ्रावळीभीषणं, राक्षसौघं, समुच्छिद्य निर्विघ्नसम्प्राप्तयज्ञं कृतज्ञं मुनिं गाधिसूनुं समाराध्य पादाब्जरेणुप्रभावोन्मिषज्जन्मसाफल्ययाहल्यया पूजितः-शम्भुकोदण्डदण्डं द्विधा भञ्जयन् जानकीं कानकीं कान्तिमद्धेजयन्तीं,- मनोरञ्जनीं कामकाण्डासपुष्पच्छटाशिञ्जिनीं दुष्टदोषौघवंशावळीभञ्जिनीं तां समुद्वाह्य वाह्यावळीसंवृतस्सन् समागत्य गत्यन्तरायं वितन्वन्त,- मत्यन्तकोपं, युगान्तोग्र सङ्कर्षणाग्निच्छटा(ज्वाल)कीलासमालोलचूडालमत्युग्रधारं कठोरं कुठारं वहन्तं दहन्तं पुरा क्षत्रकान्तारमत्युद्भटं भार्गवं, तं विनिर्भर्त्स्य चाच्छिद्य हस्तात्पुरारातिचापं दुरापं परैरेत्य साकेतमाप्तस्समोदम्॥ १॥

ततस्त्वं महीपालनाथार्थितो मङ्गळाचारमाप्तस्तदा कैकेयीं प्राह दूती सुतस्ते वृथाभूदमन्दाधिकारे स्थितो रामभद्रः तनूजं तव प्रेष्यभावे नियुञ्ज्यादिति प्रोदिता राजकान्ता नृपालं शनैः प्रार्थयामास पूर्व वितीर्ण वरद्वन्द्वमद्वन्द्वमाजावसह्यं निशम्यैतदत्युत्कटं खेदमापावनीपालमौळिस्तदाकर्ण्य देव्या सुमित्रातनूजेन साकं वनं प्राप्तवानीश्वरस्त्वं नृपश्चेन्द्रलोकं तदागत्य वृत्तं निशम्यार्तचित्तस्समाहूत्य तत्कृत्यमत्यन्त-भक्तिप्रकर्षेण देवस्य दास्येऽप्यहो नैव योग्योऽहमस्मीति देवं भवन्तं कृपा-

पारपाथोनिधिं प्रार्थयान-स्त्वदीयं पदद्वन्द्ववाहोचितं पादुकायुग्ममासाद्य सद्यः कृतार्थोऽभवद्राजपुत्रोऽवरो दासभूतः स्वराज्ये निवृत्ताभिलाषोऽग्रजं देवदेवं सदा चिन्तयन्नेव वैराग्यराज्योत्सुकोऽभूदजस्रम् ॥ २ ॥

ततस्त्वं प्रजानां शरण्योऽप्यरण्यं समासाद्य कारुण्यपूर्वं मुनीनर्दितान् यातुधानैरजस्रं परीतांस्त्वमार्तावनैकप्रवीणः—कृताध्वावरोधं विराधं समुत्सार्य गच्छन्--स्फुरत्तीरवानीरगोदावरीवारिरिङ्गत्तरङ्गालिश्रृङ्गारिताऽनेककोकावलिध्वाननैकप्रसङ्गस्फुरत्तालतक्कोलहिन्तालचूतादिनानाविधा--नोकहालीसमाक्रान्तकान्तारभागे चरन्। पञ्चवट्यां निशाटीं कनत्कामशास्त्रप्रसङ्गैकधाटीं स्वसौन्दर्यविभ्रान्तखेटीं, विरूप्याहवायैकगोपादभिप्रद्रवन्तं, दुरन्ताट्टहासप्रभिन्नाण्डभाण्डम, खरानीकमुद्दण्डकोदण्डदण्डोच्चलच्चण्डकाण्डाग्निकीलाभिराप्लावयन् वीरलक्ष्मीदृढाश्लेषणासक्तचित्तोऽपि देव्या समालिङ्गितो मोदमानो यदासीत्तदा सोदरीवक्त्रमालक्ष्य वैलक्ष्यमन्दूषितं सन्निकर्षं समागत्य मायाकुरङ्गच्छलेनाशुसंमोह्य कान्तां प्रगृह्यानुधावन्तमन्विष्यता पक्षिराजाय वैराजमेवालयं सम्प्रसाद्य-प्रयातेन कावन्धनिर्बन्धविध्वंसनं कुर्वता गर्वितानेकपोद्दण्डशुण्डाहतिक्षुभ्यदम्भःपृषच्छीतवातोल्लसत्प्रान्तकान्तारखेलन्निलिम्पाङ्गना--बद्धकौशेयकम्पां निजोदग्रतोयोच्चलन्मीनसंवल्गनोद्भूतशम्पां, समासाद्य पम्पां, च वृत्रारिपत्रार्दिनं मित्रसूनुं निशम्याञ्जनेयं विलोक्याथ तेनैव साकं गिरिं ऋष्यमूकं समारुह्य चाग्राहि सुग्रीव उग्रप्रतिज्ञः सखित्वेन देवेन दिव्यप्रभावेन ॥ ३ ॥

पश्चाद्धरित्रीसुतामुक्तभूषाविशेषावलोकात्तहर्षं, समालिङ्ग्य सुग्रीवमुत्साहयन् -वालिना योद्धुमारब्धयुद्धं, प्रसिद्धप्रतापं समिद्धाग्निकोपं प्रचण्डोग्रदोर्दण्डनिष्पिष्टसुश्लिष्टदन्तावळिं, भीतलङ्काधिनाथं प्लवङ्गाधिनाथं विनिर्भिद्य बाणेन घोरारिविध्वंसनैकप्रवीणेन सुग्रीवमत्यन्तखेदानतग्रीवमासिच्य सर्वप्लवङ्गाधिराज्याभिषेकोदकेनाशु सीतासमन्वेषणार्थं कपीन्द्रेण संप्रेषितैर्वानरैस्सार्धमालोक्य भूमण्डलं मैथिलीं तां विचेतुं समुद्रं समुल्लङ्घ्य चोपेत्य लङ्कामशङ्कं पराजित्य देवीं विलोक्याङ्गुलीयं समर्प्याप्य सीताशिरोरत्नमायान्तमत्युत्कटाटोपविध्वस्तरक्षोमहोद्यानमुज्जृम्भितक्रोधमुद्धूतलाङ्गूलसंभग्नदैत्यालिमादग्धलङ्कं निरातङ्कमुत्प्लुत्य वारां निधिं तूर्णमागत्य दृष्टा विदेहात्मजेति प्रियोदन्तमावेदयन्तं हनूमन्तमानन्दसान्द्रं विलोक्याद्रिराजं महेन्द्रं रणोत्साहसन्नाहि-

ानेकशाखामृगव्यूहकोलाहलध्वानवित्रस्तवन्यद्विपेन्द्रं समासाद्य सेनानिवेशं वितन्वन्नतन्वा रणोत्साहलक्ष्म्या समुद्दीपितोऽभूः ॥ ४ ॥

ततो वारिधेस्तीरमागत्य सन्तारणोपायमालोचयन्तं भवन्तं निशम्याहवे यत्नमुत्साहयन्तं महादुर्नयं तं विवेकादपेतं निजं पूर्वजातं परित्यज्य निश्चित्य देवं प्रपन्नावळीमुख्यबन्धुम्, कृपादुग्धसिन्धुं शरण्यं प्रसन्नं महाबुद्धिसम्पन्नमन्यादृशश्रेष्ठगाम्भीर्यशौर्यादिसद्भूषणं, मित्रहृत्तापसंशोषणं, (त्व) तत्पदान्वेषिणं, राक्षसेन्द्रानुजं, तं, समालभ्य चालिङ्ग्य सत्कृत्य सुग्रीवसख्येन संयोज्य लङ्कां प्रयातुं रिपुध्वंसनं संविधातुं, महीजामुखोल्लासहेतुं, समाबध्य सेतुं पयोधौ सुवेलाद्रिमागत्य वेलातिगानीक कोलाहलध्वानलीलाविनिर्धूतसालौघशृङ्गान् करास्फोटविभ्यत्पतङ्गान् गदाभिण्डिवालादिभिर्भञ्जतो यातुधानान्महेन्द्राहितादीन्पराजित्य विध्वस्तमस्तं प्रहस्तं विहस्तं विरच्याशु धूम्राक्षमाक्षिप्य रक्षोगणाध्यक्षवक्षस्स्रवद्रक्तसम्प्रोक्षिते युद्धरङ्गे पुरोदृष्टदंष्ट्राकराळोग्रदुर्लक्ष्यवक्त्रं, महावज्रनिर्घोषतुल्यप्रहासारवोद्भिन्नदिक्कुम्भिकर्णं, विधूयासुरं कुम्भकर्णं, मदोन्मत्तमत्युग्रनादं, कृतारातिभेदं, रिपुं मेघनादं सुमित्रातनूजात्तजीवप्रतोदं निशम्याथ सङ्ग्रामरङ्गे समायान्तमाक्रान्तदिग्दन्तिदन्तच्छटाविद्धदेहं महाहुङ्कृतिध्वस्तदेवाधिपव्यूहमासाद्य युद्धे मदोद्दण्डवेतण्ड शुण्डाभदोर्दण्डविस्फारिताघोरकाण्डासनिर्यत्ननिर्यत्प्रचण्डाशुगासारधाराभिराविध्य वाराहवक्षोणिभागे निपात्यामरध्वंसनोत्कण्ठमारक्तपुष्पावळीवीरमालालसत्कण्ठमाराद्रणे पङ्क्तिकण्ठं तदात्वप्रहृष्यन्महेन्द्रादि वृन्दारबृन्दैरनूनैः प्रसूनैस्समावर्षितो हर्षितः स्तूयमानोमुनीन्द्रैर्महानन्द सान्द्रैस्समं दानवेन्द्राधिपत्येऽभिषिच्याथ तद्भ्रातरं तेन चानाय्य सीतां, सुचारित्रपूतां, महीगर्भजातां महिम्ना समेतां सतीमग्निपूतां, समागम्य सम्यक्सुरैः प्रार्थितः किन्नराधीशयानं सदाम्लानसूनं, समारुह्य साकेतमागत्य तं भ्रातरं कैकयीपुत्रमत्यन्तसंशुद्धचारित्रमालिङ्ग्य हृष्यन्वसिष्ठादिभिर्ब्रह्मनिष्ठैर्वरिष्ठैश्च राज्येऽभिषिक्तमानन्दसान्द्रस्त्वमिन्द्रस्त्वमग्निस्त्वमीशः परं ब्रह्म विज्ञानमूर्तिं भवन्तं महानन्दरूपं शरण्यं प्रपन्नोऽस्मि मां पाहि नित्यं नमो देव तुभ्यं मुहुस्स्तान्नमः ॥ ५ ॥

सीतालक्ष्मणशत्रुघ्नभरतानिलजोडुभिः ।
मनोविष्णुपदे नित्यं भायान्मे रामचन्द्रमाः ॥

इति श्रीरामापदानसुधाझरीदण्डकं सम्पूर्णम्

॥ श्रीमते हयग्रीवाय नमः ॥

# ८. अथ हयग्रीवतारकमालास्तवः

अब्जगापक्षिफणिराड्बर्हिभामामणीश्वरैः ।
[1]सापवर्गं प्रपद्येऽहं मुकुन्दमपवर्गदम् ॥ १ ॥
वेदाम्बुनिधिराकेन्दुं [2]हरिण्याश्लिष्टवक्षसम् ।
[3]कलावासं प्रपद्येऽहं [4]विबुधामृतवर्षिणम् ॥ २ ॥

अन्तर्लापिपद्यम्

हृताशेषावद्यां युजत वरदात्रीं दुरहरां
नुतानां प्राशर्म्रीं दुरितहरणां काञ्चनमयीम् ।
पुरार्धे पद्येऽस्मिन्प्रतिपदपुरोगाक्षरगणै
रभिज्ञेयां देवीं श्रुतियुगमनोहारिनिनदाम् ॥ ३ ॥
कृत्तेऽप्याकण्ठदघ्नं पनसफलमधूच्चूषणव्यग्रतुण्डः
प्राणापायात्पुरस्तादपि नहि विकृतिं याति यस्मिन्पिपीलौ ।
तस्यैकान्त्यं मयित्वं गमय हयहरे तावकीनाङ्घ्रिपद्मे
मद्देहान्ते स्वयं हि स्मरसि निजभरं स्वीकृतं देशिके[5]भ्यः ॥ ४ ॥
दिव्या [6]धीशाक्षमाला जयति भगवती वामनीं विष्णुमूर्तिं
यल्लीला वाक्प्रपञ्चं लघुतरवपुषा ह्यामभावव्यलीकम् ।
पञ्चाशद्वर्णमय्यां परिमितमभवद्वाङ्मयं वस्तु यस्यां
या मूलं सर्गकृत्ये सरसिजजनुषो यां प्रपन्ना [7]रसज्ञाः ॥ ५ ॥

हयग्रीवतारकमालिका

आत्मन्याश्वास्यभावं स्फुटमवगमयन्नास्यभागेन नित्यं
सं[8]ख्यावत्पुण्डरीकीकरणचटुलतां पुण्डरीकासनेन ।
[9]श्रुत्युद्धारापदानं निरुपममनिशोदञ्चिताभ्यां श्रुति[10]भ्याम्
प्राचां वाचामधीशो विलसतु सततं मानसे मामकीने ॥ ६ ॥

---

[1] अश्व–पवर्गश्च अपवर्गौ ताभ्यां सहवर्तत इति सापवर्गः तं सापवर्गं अकारेण, पादि–मान्ताक्षरैश्च सहितं इत्येकोर्थः मोक्षसहितमित्यपरोऽर्थः. [2] हरिणी–लक्ष्मीः. "हिरण्यवर्णां हरिणीं" इति श्रीसूक्तोक्तेः "शुभाङ्गोलोकसारंग इति सहस्रनाम-पठितलोकसारंगाख्यविष्णुपत्नीश्रीः हरिणी. [3] षोडशकलानां, विद्यानां च आवासं. [4] देवानां विदुषां च. [5] देशिकानां, इभ्यः–स्वामी प्रथमाचार्य इत्यर्थः. वेदोद्धार वेदागमाद्युपदेशद्वारा भगवतः प्रथमाचार्यत्वं. [6] अकारादिक्षकारान्तपञ्चाशद्वर्णमूलात्म-काक्षमाला. [7] सारज्ञाः, जिह्वाश्च. [8] सङ्ख्या ज्ञानं तद्वान् पण्डितः. [9] श्रोत्रोद्धारः, वेदोद्धारश्च. [10] श्रोत्राभ्यां, कर्मज्ञानरूप–पूर्वोत्तरकाण्डश्रुति समुदायाभ्यां च.

अरिं तव करास्थितं वयमवेक्ष्य मुक्तारयः
निशम्य दरनिस्वनं व्यपगतो दरः क्वापि नः ।
भ्रमः परिहृतोऽघनः तव हयाननाक्षभ्रमैः
निशम्य मतिमुद्रिकां विमतिरस्तमाप क्षणात् ॥ ७ ॥
प्रत्नं गन्धर्वरत्नं विविधशुभगतिप्रापकाङ्घ्रिं प्रपद्ये
यन्नासाक्षीरकण्ठैरमितसुरभिलैर्विप्रुडश्वैरसंख्यैः[1] ।
वेदाख्यैर्नित्यलीलां निरवधिरुचिरां निस्समानश्रुवानः
दुग्धे श्रेयांसि तेषां निजतनुजनुषां सन्ततं यः पृथिव्याम् ॥ ८ ॥
मृष्टत्वष्टाभ्रदिव्यस्फटिकगिरिघृणिश्रेणिगर्वोन्नतिघ्नं
पद्मासंश्लिष्टवत्सं धवळहयगळं ज्योतिराद्यं प्रपद्ये ।
यत्पादाम्भोजदृष्टिस्मृतिनतिविनतिस्पर्शदीक्षाः क्षणार्धे
विज्ञानं विश्वमान्यं प्रदिशति विमलं ध्वस्तहार्दान्धकारम् ॥ ९ ॥
सोमादित्याग्निरूपत्रिदळसुमिळितं बीजमोंकारमुप्त्वा
नाभीडिम्भालवाले सलिलरुहरजोदोहळैस्सान्द्रदिग्धे ।
सिञ्चन् कारुण्यदीक्षामृतरसमसृजद्वेदकल्पद्रुमं यः
स श्रीमान् गोभुमस्मान् प्रदिशतु करुणाकर्षको धीसुभिक्षम् ॥ १० ॥
[2]श्रुत्याम्नाताश्वमेधप्रकरणपठितोत्तुङ्गसंभिप्रसूतः
प्राक्सम्भूतप्रशस्तक्रतुपशुमहिमवाऽवनौ जायमानात् ॥
श्रीमद्वैकुण्ठसद्मः प्रथममिह भुवि श्रीकृतात्मावतारां
वाजिग्रीवानुकम्पामपहतकलुषां मातरं तां प्रपद्ये ॥ ११ ॥
भाषाभूपालमीडे धवळहयगळं यस्य राज्यं त्रयीयं
शिक्षाद्यङ्गान्यमात्याः युवधरणिपतिः पाञ्चरात्रं नियोज्याः ॥
व्यासादीनां प्रबन्धाः कविवरकृतयः सुप्रजा दर्शनानि
न्यायस्थानान्यविद्यात्वहितनरपतिः निर्मला धीर्निधानम् ॥ १२ ॥
वेदावधेयमखिलाक्षरनामधेयं
श्रीभागधेयमतुलोज्वलरूपधेयम् ।
ईडेऽक्षिपेयमतिवेलदयाविधेयं
हृत्सन्निधेयमहमश्वमुखाभिधेयम् ॥ १३ ॥
वाणीं निजाङ्करसिकां प्रसमीक्षमाणः
धीमुद्रिकाब्जवरकोशरथाङ्गहस्तः ।

---

[1] पृषदश्वैः—गन्धवाहैः. [2] " समुद्रमुदरमन्तरिक्षम् " इति कृष्णयजुस्संहितासमाप(न)मन्त्रार्थं दृष्ट्वारब्धमिदं पद्यम्.

एकाक्षरेण रुचिरे निजमन्त्रचक्रे
बद्धासनो जयति वाक्पतिचक्रवर्ती ॥ १४ ॥
आश्वास्यं सुद्ध्युपास्यं लसतु हृदि महो नः प्रशस्यं यशस्यं
रक्षाऽस्यं सदस्यं सहृदयवचसां सामरस्यं रहस्यम् ॥
वाक्स्वारस्यं विलास्यं निजपदकमलासक्तजिह्वाग्रलास्यं
मध्वालस्यं सुधास्यं विधिमुखविबुधाशास्यदास्यं हयास्यम् ॥१५॥

क्रियापदगुप्तिः

ईषत्प्रणामसरलं नतजालपालं
कल्याणवाक्परिमलं मधुनः कराळम् ।
जङ्घालचित्तनिगलं सरळानुकूलं
वाग्वल्लभाङ्घ्रियुगलं [1] हृदयातिवेलम् ॥ १६ ॥

हयग्रीवतारकमालिका

अपि वाग्यजने शक्तं गुप्तं भव्यं क्रियापदम् ॥
अतो वागीशतद्गुप्तं प्राकपद्य ज्ञातमावयोः ॥ १७ ॥

सारस्वततोरणबन्धः

मतिप्रभुमनोमखप्रवणमन्मनोमन्दिरे
स्फुरन्मणिगणान्वितप्रतिसुवर्णनासाग्रतः ।
अयं हि चतुराननप्रियतमामयस्तारणः
सुवर्णघृणिवर्षणो जयति वाक्पतिप्रीणनः ॥ १८ ॥

उदाहरणपद्यम्

श्रीवागधीश देव त्वमभयप्रद मामव ।
अस्यनन्तदयासद्मरक्षकस्त्वं सदा मम ॥ १९ ॥
श्रीमन्वाजिगळाधीतिशस्य देवाव नौत्वथा ।
मम भव्याय सुप्रज्ञा दत्तामान्यमतेऽव माम् ॥ २० ॥
अज्ञस्य ज्ञानकान्तत्वं दयायाः प्रासपद्मया ।
रम्याक्षराकरस्त्वं हि समदास्सुमतिं मम ॥ २१ ॥

सकलामयघ्नसुधांशुबन्धः

कलाजालाऽचलापालाऽमलालीलाऽखिलांसला ।
मेलानीलाबलामूला शीलान्दोलाकिलाऽतुला ॥ २२ ॥

---

[1] ही हृत्, अय, अतिवे लमिति पदच्छेदः. णय.

नित्यकल्याणवाङ्मूलदेशिकं सैन्धवं श्रये।
मन्दुरा यस्य राकेन्दुः हेषाहलहलः श्रुतिः ॥ २३ ॥
परमाक्षरसंपत्तिवर्षिवैहायसाम्बुदः।
जडेऽस्मिन्परमाश्वास्यः क्षरत्वक्षरसम्पदम् ॥ २४ ॥
सरसौ मधुराक्षान्ते प्राप्तौ येन शुभाशुभे।
सोऽव्यात्कमलदो देवः कमलघ्नस्तदासनः ॥ २५ ॥
वत्स मां विद्धि वागीशं त्वां रक्षितुमिहागतम्।
[1]समाहूतं समायातमित्यर्थिसुलभं श्रये ॥ २६ ॥
सद्यः प्रणम्रावनवद्धकङ्कणं
क्षणात् समुन्मीलितसंविदीक्षणम्।
लोकद्वयक्षेमकृदुक्तिवर्षिणं
श्रुतीक्षणं नौमि मधुप्रमापणम् ॥ २७ ॥
इमं पुराप्राप्त[2]परत्वमुक्तं
प्रजापतिं प्राप्तमजापतित्वम्।
[3]परत्वदानेन पुनः प्रजेशं
चक्रे कृपा यस्य पुनातु सा माम् ॥ २८ ॥
विज्ञानमूलं श्रुतिजालपालं
रमाविलोलं धृतपीतचेलं।
सुशीलमुज्जीवितनाभिबालं
नतानुकूलं मधुकालमीडे ॥ २९ ॥
हयशीर्षविलासार्चिरन्तस्थोष्मस्वरूपिणः।
भस्मसात्कुरुतां सव्यकुक्षिगं पापपूरुषम् ॥ ३० ॥
सेयं तारकमालिका नतजनक्लेशाब्धिसन्तारक-
श्रीमद्वाजिमुखाङ्घ्रिपद्मयुगले प्रज्ञामृतस्यन्दिनि।
आम्नायाचलसत्यसद्मकुलज श्रीवाससद्देशिका-
चार्याणां तनयेन तत्समनिजाख्येनार्पिता सादरम् ॥

इति श्रीशैल-सत्यनिलय-श्रीनिवासदेशिकाचार्यकृतिषु हयग्रीवतारकमालिका समाप्ता.

[1]"उपहूतोवाचस्पतिरुपास्थान् वाचस्पतिः ह्वयतां" इत्यथर्वण संहितायां वाचस्पत्यसूक्ताम्ना (तानि) नी. [2]प्रजापतिमित्यत्रपकार–रेफाभ्यां मुक्तं इत्यर्थः एवं चेत् "अजापतिं" इति शिष्यते पुनस्ताभ्यां योगे प्रजापतिमिति, अजापतिः–मेषः. [3] १६तमटिप्पणिं पश्यत.

## ९. श्रीहयग्रीवदण्डकम्

दिव्यं सै[1]न्धवमीडेऽहं र[2]सज्ञानन्दवर्षिणम् ।
व्याहाराहारसाद्गुण्यं न विना यत्समीक्षणम् ॥ १ ॥
आविश्य मद्रसज्ञाऽग्रं करुणाहयकन्धरः ।
स्वप्रीतये स्वविषयं प्रोन्मीलयतु दण्डकम् ॥ २ ॥

जय जय परब्रह्मविद्योपदेशप्रचारादिविख्यातचारित्रवाणीपरब्रह्म, पादप्रपन्नात्मभक्तव्रजाजिह्म, सर्वज्ञसर्गज्ञफालाक्षतत्तातचेतोगुहासिंह, निस्सङ्ख्यकोट्यन्तविध्यण्डबाह्यान्तरव्याप्तिवाणीविसंवादविध्वंसकस्त - म्भसन्दर्शिताकुण्ठवैकुण्ठसिंह, विज्ञातधर्मार्थमोक्षार्थिजिज्ञास्यसर्वोत्त-मानन्तकोटिप्रजेशाण्डसर्गस्थितिध्वंसमोक्षादिमूलेश हे शास्त्रयोने, सुधा-हृद्यदेवापगाजन्मशैलप्रतीकाश, वेदापगाजन्मकर्पूरशैलेश, हे श्रीश, नारायणाशेषलोकेश, वेदेश, देवेश, कल्याणसन्देशरत्नापगाधीश, हृत्पद्मसंवेश, जिह्वाग्रनास्याश, वाग्विश्वभूमीश, हीराद्रिसङ्काश, हस्तोल्ल-सत्कोश, सत्कर्मनिर्वाहलोपागमादेश, भूतेश, विध्वस्तजन्मादिदुष्पाश, वागीश, विज्ञानपीयूषसिन्धो, हयग्रीव, हार्दान्धकारच्छटोच्चाटनादित्य-कोटिप्रकाशाऽमलज्ञानविश्राणनैकव्रतिन्नुद्धृताम्नाय, राकाकलाकान्त-सद्मिन्, (सद्मन्) वळक्षाब्जसिंहासनासीन, विद्यासमाश्लिष्टवामाङ्क, विज्ञानमुद्रात्रयीकोशकम्बुक्षमाधीशहेतीशसंश्लिष्टपाणिद्वयद्वन्द्व, गोक्षीर-सङ्काश वर्णोज्वलाकार, पञ्चाशदाकार वर्णाश्वधा[3]राप्रभेदप्रवाहप्रसृष्टान-वद्यादिमध्यान्तनिर्भुक्तहृद्यागमस्तोमपीयूषरत्नाकराधीश, म[4]ध्वाशरघ्नेश मन्मानसे सन्निधेहि, प्रसीद, त्वदीयोज्वलाङ्घ्रिंविना नोगतिर्मे ध्रुवं कल्पकोट्यापि कारुण्यसिन्धो, भवत्पादयुग्मं तथा पाणिपद्मं भवत्पाञ्च-जन्यं च विन्यस्य मन्मूर्ध्नि दुर्मोचमज्ञावगूढान्धकारं समुच्चाट्य हृद्यां, समुन्मीलयाद्यां, परब्रह्मविद्यां, नमस्ते विदध्याम् ॥ १ ॥

अपिच नम इदं तेऽस्तु—शाणोपलत्वष्टधारासहस्रोल्लसद्धीरशैल-प्रतीकाशकल्याणगात्रोत्थराकासुधाकान्तकोटिप्रभाकल्पसौम्यांशुविक्षेप-विद्योतिताशेषभूरादिलोकाय, लोकेशताताय, तादृग्यजुर्वेदऋग्वेदसा-मागमाथर्वणाम्नायतत्पाञ्चरात्रागमश्रीशठारातिवेद --क्षमा[5]कर्णाडम्भाग-

[1] दिव्यलवणं, दिव्याश्वश्च. [2] जिह्वा, विदुषश्च. [3] अश्वगतिभेदाः " गतयोऽमूः पञ्चधारा " इत्यमरः. [4] मधुराक्षसघ्नः. [5] भूश्रोत्रपुत्रः वाल्मीकिः, तदागमः श्रीमद्रामायणं " वेदः प्राचेतसादासीत् " इत्याद्यभियुक्तोक्तेः.

मादिप्रमाणप्रतिक्षिप्तवादीभसंक्षुब्धदुर्मोचहार्दान्धकाराय, हेषामयाम्नायबीजाक्षरीसृष्टवागर्थरूपद्विसप्तप्रपञ्चाय, सर्वोन्नतायाऽऽत्मपादानतज्ञानवीक्षाविकासार्हचन्द्रांशुनिष्पन्नदिव्याञ्जनाय, अमलज्ञानविज्ञानपीयूषसिन्धून्निनीषात्तलीलाघटीयन्त्रमालायमानाक्षमालाढ्यहस्ताय वाग्देवताव्यासवाल्मीकिवाचस्पतीशानलोकेशसंग्राहिताशेषविद्याधिकाराय, बर्हिर्मुखाचार्यनिष्कम्पनिष्पङ्कसर्वोत्तरज्ञानकौशल्यसंरक्षितात्युच्चदोलायमानामराधीशसंस्थानसौधर्मपीठाय, विज्ञानसाराय, मान्तस्वकीयैकमूलाक्षरीमन्त्रवाच्यामरेन्द्राय, तत्सूक्ष्मचिद्वर्गसूक्ष्माचिदर्थांशयुक्तस्वरूपाय, कार्यप्रपञ्चान्तराविश्य नामांशरूपांशदात्रे, प्रशास्त्रे, विशिष्टैकतत्वस्वरूपाय, लब्धाप्ययावस्थनिस्संज्ञनिश्चेष्टपाषाणकल्पापरिच्छेद्यजन्तुव्रजन्यस्तगात्राक्षजालाय, भूषांशुकस्त्रीफणीशानसेनेशपक्षीशसूरीन्द्रमुक्तालिलीलाविभूतित्रिपादप्रपञ्चाभिरामाय, सर्वांशसत्याय, देवापगाश्लिष्टतौषारशैलेन्द्रसौन्दर्यलुण्टाकवेदव्रजाकारहेषाझरीरूपकल्याणगात्राय, लालासुधावर्षिवैकुण्ठमेघाय, वैहायसाभिख्यतीर्थान्तिकव्यक्तदिव्यात्मरूपाय, तत्रस्थदेवर्षिसङ्घावगाह्यात्मवेदप्रवाहाय, विक्रान्तलोकाङ्घ्रिदण्डोन्नतागाधमद्दीर्घहृद्दीर्घिकाम्भोजहर्यक्षपीठाय, दिव्याश्ववक्त्राय, मद्भ्रंशनिक्षेपरक्ताय, तुभ्यं प्रणामः, प्रसीदार्तबन्धो, शरण्य प्रयच्छाङ्घ्रिदास्यश्रियं दायभूतां नमस्ते पुनः ॥ २ ॥

हयमुखमविद्याप्रपञ्चैकभूपालमध्वाशराघातसम्मूर्छिताम्नायविद्यावधूक्लेशपाशघ्नमीड्यम्, श्रुतश्रीसमृद्धाजदुर्मोचदुर्मानमूलच्छिदम्, खिन्नपादप्रपन्नाजसम्प्रार्थिताम्नायसम्पत्प्रदम्, तद्विशुद्धाखिलज्ञानलुण्टाकसार्थाभिधानासवाख्यास्रपघ्नम्[1], त्रिवर्गापवर्गाप्तिसत्कर्मविज्ञानमूलागमव्रातविश्राणनत्रातभूरादिसंज्ञाद्विसप्तप्रपञ्चम्, सुमज्ज्ञानिसंज्ञम्, सदाचार्यमाद्यम्, तदाचार्यसम्प्राप्तविज्ञानवैराग्यसम्प्राप्त्यनुष्ठानभक्तिप्रपत्त्यार्यसेवानुरक्तिश्रुताध्वानुवर्त्युत्तराद्याप्रसक्त्यादिसाम्राज्यदाऽऽत्मीयफुल्लाम्बुजस्पर्धिकारुण्यसंवर्षिवीक्षापरित्रातभक्तप्रपञ्चम्, नतार्तव्रजानर्थविध्वंसदीक्षम्, स्वपुङ्खानुपुङ्खास्यहेषामयाम्नायतद्व्रातसूत्रतद्भाष्यतट्टिप्पितत्कारिकाशास्त्रसंगीतसाहित्यसद्दर्शनव्रात-वैद्यागमालङ्कृतिप्राकृताख्यानसामुद्रशास्त्रादिवाणीप्रपञ्चाचिताशेषलोकम्, चतु

---

[1] आसवाख्यास्रपः=मधुनामको राक्षसः.

ष्षष्टिसङ्ख्याकनानाकलाजालमूलम्, दयातन्त्रलोलम्, विशालात्मशीलम्, सदाप्यन्तिकस्थम्, स्मृतेऽप्यग्रदृश्यम्, नताघोंपहृतेः प्रतिश्राव्य-वाणीं सहासं क्षणाधाद्दिशन्तम्, भवन्तं—सलीलं प्रपन्नोऽस्म्यभीतोस्मि दासोऽस्मि धन्योऽस्मि तुभ्यं नमोऽस्तु ॥ ३ ॥

पुनरपि-दयासिन्धुमङ्घ्रिप्रपन्नात्मनाभिस्थलीडिम्भवाचस्पतीन्द्रादिदिक्पाललोकामरव्रातमौळिस्थरत्नांशुनीराजिताङ्घ्रिम्, मुमुक्षुप्रपन्नप्रपत्तिप्रयोगप्रगम्याङ्घ्रिरुक्मोयमित्यागमोक्त्यापि सत्यापितम्, वाङ्मनःकायसंशुद्धिकल्पान्तविख्यातिभूतिप्रदात्मीयपाठीनकूर्मेशभूकोलसिंहास्यसर्वोच्चकश्रीशचण्डाग्रगण्येशकाकुत्स्थतालाङ्कवृन्दावनश्रीशकल्यन्तकल्कीशरूपोज्ज्वलम्, मातृकावर्णसप्तांशसव्याऽपसव्यादियातप्रभेदप्रसृष्टानवद्याप्रमेयश्रुतिव्रातमज्ञानसन्देहसङ्क्रान्त्यथाज्ञाननिष्कासनार्थस्मृतिप्रापणार्थप्रतिष्ठापितोदाररेखाविशेषात्मसोमानलार्केन्द्रवर्गस्वरूपाऽक्षमालामनोज्ञाक्षहस्तम्, निजास्थानसिंहासनाग्रस्थपद्मासनेशानवाणीमुखाखप्रजालप्रगीतापदानम्, सदा हृष्टचित्तम्, सहासास्यपद्मम्, सदा-सानुकम्पम्, सकान्तम्, महान्तम् सुदान्तप्रशान्तात्मयोगीन्द्रचेतोनिशान्तम्, दृगन्तं, निजान्तम्, दिशन्तम्, हृदन्तर्वसन्तं, क्षरन्तम्, भवान्तम्, भवन्तं दयार्वन्तम् ईडेवृणेऽहम् सदस्यम्, रहस्यं, च विश्लेयवृत्तम्, समस्तं च दास्यम् च भवत्पादपद्मे नमस्ते पुनः ॥ ४ ॥

हयमुखमविद्याकुहूसुप्रभातात्मवेदावळित्राणसत्कर्मविज्ञानवैशद्य--सन्धातृवेदागमार्थप्रकाशोक्तिजालोपदेशैकसंसक्तपाठीनकूर्मादि-कोलापदानानुसन्धाननिष्ठार्यकप्रदिष्टोक्तिशुद्धिम्, स्वभक्तिप्रभावोन्नतिस्फूर्तिकृन्नारसिंहावतारापदानाक्षभक्तव्रजन्यस्तचेतोविशुद्धिम्, दृढब्रह्मचर्यातपस्सर्वसामान्य-भव्याङ्घ्रिविन्यासदुर्मोचसर्वाघसंशोषकाम्भःकणांशाद्युगङ्गावतारापदानोज्वलाकारतद्वामनाऽखर्वपादावतारानुभावज्ञसत्पात्रसंप्रत्तसर्वाङ्गशुद्धिम् प्रदृप्तक्षितीशप्रपञ्चक्षतिख्यात-तद्रोपराम–प्रदग्धासुरेन्द्रप्रपञ्चार्तरक्षैकदीक्षवीर्यानुकम्पांशराम—प्रदृप्तप्रलम्बादिविध्वंसविख्यातगोगोपगोपीशलीलासुधाम्बोधिसंवृद्धिराकेन्दुतालाङ्कराम--दैत्यांशकंसादिविध्वंसगीतोपदेशाद्यसाधारणाकारविश्वोपकारप्रसिद्धाख्यश्रृङ्गारभक्तिप्रगम्याङ्घ्रिकृष्णावताराऽखिलम्लेच्छानिर्मूलनप्रेष्ठधर्मप्रतिष्ठापनाद्यात्मचारित्रावि - ख्यातकल्यन्तसंसेव्यकल्क्याख्यदिव्यावतारानुसन्धातृलोकैधितापारवि -

ख्यातिमाद्यंस्वकीयान्यदिव्यावतारात्मकल्पद्रुसन्तानकूटस्थबीजम्, तथा-ऽशेषनैजावतारप्रबन्धप्रपञ्चोल्लसत्पीठिकाग्रन्थरूपावतारम्, त्रिवर्णात्मको-ङ्कारवाच्यम्, कलानाथदैव्यस्वरव्रातगेहम्, रवीन्द्वङ्कनेत्रम्, दिनशाक्षर-स्तोमभूषास्तजालम्, समस्ताहमर्थप्रपञ्चाधिनाथात्मबीजाक्षरीकौस्तु-भोरस्कमप्राकृताशेषभागाख्य(त्म)काशानिवाष्टार्णरूपत्रिपाद्प्रपञ्चम्, श-ठारातिशेषांशघण्टांशमुख्यास्मदाचार्यमालार्चिताङ्घ्रिप्रवालम्, हयग्रीव-माद्यं भवन्तं प्रपन्नोऽस्मि मन्नाथ धीनाथ विष्णो, किशोरार्पितोयं सुव-र्णाञ्जलिस्ते मुदे कल्पतान्तावदाकल्पमङ्घ्रिम्, मदीयोत्तमाङ्गे निधेह्युज्ज्वलं ते सदासूरिवन्द्यं किरास्मिन्ननाथे कृपार्द्रावलोकम्, प्रदेयं प्रदेहि प्रसादं किशोरोऽस्मि दासोऽस्मि भृत्योऽस्मि विन्यस्तभारोऽस्मि निर्मुक्तधूरस्मि निर्वृत्तकृत्योऽस्मि सोहं कृतार्थोऽस्मि निस्साध्वसोद्याऽस्मिकैङ्कर्यभागस्मि सत्कामराडस्मि हर्षाब्धिमग्नोऽस्मि सर्वांशधन्योऽस्मि कारुण्यभूम्ना तवा-ऽहम् रमाधीश वागीश तुभ्यं नमः किञ्च तुभ्यं नमः ॥ ५ ॥

भूयाल्लोचनयोरग्रे भायान्मच्चित्तदर्पणे ।
देयात्प्रतिवचः श्राव्यम् मयाऽहूतो हयाननः ॥ ३ ॥

इति श्रीशैलसत्यनिलय श्रीनिवासदेशिकाचार्यकृतिषु
श्रीहयग्रीवदण्कडम्
सम्पूर्णम्

# १०. हयग्रीवध्यानदण्डकम्

हयाननो मयाऽऽहूतः दयात्प्रतिगिरः शुभाः ।
भायान्नयनयोरग्रे भूयान्मन्मानसाम्बुजे ॥ १ ॥

जय जय हयग्रीवविद्यासमा(स)भ्यार्थितत्ताद्धिताभ्यर्थिदेवान्तरानर्थि-आराधरैकान्तिखेटव्रतारूढदेवर्षि - विप्रर्षिराजर्षिभक्तप्रपन्नात्मलोकैकजी , ातुसेवामृतस्यन्दि-पादारविन्दाय, तादृङ्महाकूर्मपृष्ठप्रतीकाशपादाग्रभा-ााय, दिव्यप्रभापूर्णलीलाकळाच्याभजानुप्रभापूरसंश्लेषविक्रान्तसौन्दर्यज-ङ्घाय, मीनध्वजारामभोचाद्रुकाण्डाभपीताम्बरच्छन्नदिव्योरुयुग्माय, शु-द्धाश्मतुल्यात्मजालत्रदिव्याम्बुरुड्दीर्घिकाकल्पसर्वज्ञशैलोल्लसत्कन्दरप्र-ख्यनाभिप्रदेशाय, पद्मावरोधात्म-नानामहारत्न-हारोपवीताद्य-दिव्यप्रसू-ालिमालासमालीढजीवव्रजाधीशरत्नोत्तमाऽऽश्लिष्ट-वत्साङ्कसंलक्ष्यवक्षः-(प्रदेशाय) स्थलायाऽऽत्मकम्बुक्षमेषाभकण्ठप्रदेशाय, पाणिद्वयद्वन्द्वसु-श्लिष्टतद्दिव्यधीमुद्रिकाकोशचक्राब्जहृद्याय, ताराकिशोराळिकल्पात्म-दन्तांशुनीराजिताशेषभूरादिलोकाय मन्दस्मितोद्धर्षिशुभ्राश्ववक्त्राय, दृशीक्षपाध्वान्तपुञ्जाभसर्वांश-सूर्यात्मजापूररिङ्गत्तरङ्गाळिसंस्पर्धिसुश्लिष्ट-दृष्टोग्रचोळीवचोवक्रदिव्यालकाश्लिष्टफालोर्ध्वभागाय, नानामणीन्द्राद्य-गाङ्गेयशैलाभताद्दक्किरीटाय, शुभ्राब्जपीठाय,, पद्मासनस्थाय, पीतांशु-केलाय, तत्त्वव्रजाकारभूषायुधाद्याय, धीमुद्रिकाचक्रशङ्खोल्लसत्कोश-हस्ताय, वामाङ्कसंश्लिष्टविद्यारमाश्लिष्टकोशाद्यहस्ताय, शीतांशुसौधाय, वेदात्मदेहाय, लाला-सुधास्याय, दिव्यस्वरूपाय, हेयोक्तिदूराय, सर्वांश-गव्याय, गोक्षीरनीहारहीरामराहार शेषोरगाकार-राकाविभापूर-गौरा-समरूपाय, वाचामधीशाय, कारुण्यसौशील्यतन्त्रैकनिष्ठाय, तुभ्यं नमः स्तादिमश्चापदार्थं दयाम्भोनिधे त्वं विलोकयार्यपादान् विशोध्याङ्घ्रिपद्य-प्रभावात्पदार्थं विधेहि प्रदेह्यङ्घ्रिदास्यम्, त्वदीयानुकम्पाक्षमातन्त्रकेतोः प्रकम्पोऽप्रकम्पश्च मद्रक्षणायत्तमेवेति निर्धार्य वाऽपि त्वया वस्त्विदं रक्ष्यमेवेति मां रक्ष देवेश लक्ष्मीहयग्रीव तुभ्यं नमस्स्तात् ॥

वन्दे पूर्णेन्दुपल्याणं करुणाश्वं रमान्वितम् ।
हेषितं यस्य वागर्थभुवनानि चतुर्दश ॥

इति श्रीशैल सत्यनिलय श्रीनिवासदेशिकाचार्य कृतिषु
श्रीहयग्रीवध्यानदण्डकम् सम्पूर्णम् ॥

## ११. शेषाद्रिपद्मालयादण्डकम्

जयतु जयतु शेषशैलाधिपामन्दलीलामहानन्दवेलातिगाम्भोधिवेलायमानोर्मिजालामितोल्लासितालापमालासुधालालनीयोरुबालामृतांशूप — मासक्तफाला, मदोद्यन्मराळाङ्गनाचारुहेलाप्रचारा, मदालानमायद्धटालाभदापाङ्गजालाभिरामा, प्रवाळायिताङ्घ्रिनीलालकाक्षोणिनीलासपत्नीसद्रसालावळीकुञ्जशालाचरद्रोपबालावलम्बा, मदम्बा श्रियै कल्पताम् ॥ १ ॥

अपि च नतसुरेन्द्रावळीस्फुरद्रत्नमौळीभवद्बालकेळीयमीनांशुमालीप्रफुल्लाङ्घ्रिनाळीकवत्यै, निजापीडसम्बद्धकाळीशचीजानिनाळीकभूसन्नुताधीनवृत्त्यै मदालीढरक्षःकराळीकृतक्षोणिशैलीसरोजातनाळीकमञ्जन्मृणाळीभवद्वैभवाळिं दधत्यै, समीचीनमोचासमाचामवाकाचारुवाचाप्रतारोन्नतायै, नमद्दासदासानुदासार्थिताकल्पसंकल्पकल्पद्रुकल्पात्मनाम्न्यै, श्रियै ते नमः ॥ २ ॥

नम इदमजहत्कृपाराजितापाङ्गधाराभुविस्फूर्तिधाराप्रक्लप्तायुदारारविन्दोत्पलारामवाटीविहाराद्यभृङ्गीकिशोरायितस्यान्तनारायणोरःस्थलीराज्यसिंहासनाराधितायै, तुषारांशुतेजःपटीरामराहारहाराळिहाराहिभीराहिसारात्मकीर्त्यै, सुवर्णश्रियै, निस्समायै, रमायै नमः ॥ ३ ॥

जय जय जगदम्ब दासोस्म्यहं ते रमावासकान्ते त्वमेवाखिलस्य प्रपञ्चस्य मातेति वाण्या पुराण्या महत्यापि सत्यापितं, सोऽहमेवं किशोरोऽस्मि भृत्योऽस्मि दासोऽस्मि तस्मात्कृपाङ्गैरपाङ्गैः प्रपन्नं शिशुं मां च सिंचा, नवद्यात्मविद्याभिरुद्योतसे त्वं परं ज्योतिरित्यम्ब मह्यं दयेथाः सुधाम्भोधिकन्ये रमे पद्महस्ते प्रसीदप्रसीद प्रसीदाम्ब मे ॥ ४ ॥

## १२. दक्षिण बदरीनाथ नारायण दण्डकम्

[1] वसुधाश्रुति वासीन्द्रशेषांशमुनिदर्शितम् ।
भूश्रुतौ श्रुतिविज्ञेयं श्रीमन्नारायणं श्रये ॥ १ ॥

---

वसुधाश्रुतिः—वल्मीकः, तत्र वासिनः—उरगाः, तेषां इन्द्रः—आदिशेषः, तदंशमुनिना प्रप्रथमं यादवाद्रौ—वल्मीके दिव्यसमाधिदशायां यादवाद्रि नारायणं यथातथं साक्षात्कृत्य तद्वल्मीकं क्षीरपयःकुम्भधाराभिरभिद्राव्य भक्तानां प्रादर्शयदिति सुप्रसिद्धं वृत्तमिदम् अद्यापि एतदपदानस्मारकमहोत्सवः प्रतिवत्सरं यादवाद्रिनारायणसन्निधौ निर्वर्त्यत इति प्रासंगिकविज्ञप्तिः ॥

जय जय यदुक्षोणिभृत्तुङ्गशृङ्गस्थकल्याणतीर्थान्तिकस्वर्णसद्मस्वयंव्यक्तसद्रत्नदीप, श्रियःकान्त, नीलाक्षमालोल, नारायणाऽम्भोजहृद्याङ्घ्रिहस्तास्यनेत्राभिरामाहिनाथांशयोगीश्वरध्यानसन्दृष्टसन्दर्शिताशेषरूप — स्वरूपादिसम्पन्निवास,. क्षमाश्रोत्रगर्भाब्धिराकानिशाकान्त, यद्वद्रिलक्ष्मीश, पीताधरीयोत्तरीयोज्ज्वलाकारसम्पत्सुतात्मस्ववेषान्तरश्रीश संवर्धिताशेष दिव्योत्सवाङ्घ्रिप्रणम्रामरस्तोममौळिस्थळारूढनानाकिरीटस्थरत्नप्रभापङ्क्तिनीराजिताङ्घ्रिद्वयेन्द्राश्मलीलाकळाच्याभपर्याय वृत्तांशजङ्घासमेषुप्रियारामरम्भाह्वयस्तम्भसंभावनीयोरुयुग्मोल्लसद्दक्षि — णावर्त-विध्यण्डसन्दोह-जीवातु जीवात्मनाभिप्रदेशोल्लसद्रत्नपुष्पोपवीतादिहाराऽभिरामाऽब्धिकन्याऽवरोधात्मवक्षःप्रदेशाऽब्ज चक्रायुधाभीतिमुद्रागदाधारहस्तद्विकद्वन्द्व, कम्बुप्रभुप्रख्यकण्ठाभिरामाऽक्षिपाथोजवक्रालकापुण्ड्रसुभ्रूललाटार्थ( धे )शीतांशुहेमप्रसूनात्मनासाऽल्पहासाभिरामास्यपाथोज, हेमाद्रिकल्पोच्चदीव्यत्किरीटाऽखिलाधारदीनव्रजोद्धारपुष्पाञ्जलिस्तत्पदाम्भोजयुग्मे सुवर्णात्मकोऽयं रसज्ञाप्रकीर्णः मुदे कल्पतां तेऽस्तु तुभ्यं सहस्रं नमः ॥ १ ॥

अपि च कुम्भोद्भवाशाबदर्याश्रमव्यक्तनारायणाऽनन्तकोटिप्रजेशाण्डनाथ, स्थितिध्वंसरक्षाविधालील, नीळारमाभूमिनिष्कासितात्मीयसर्गादिखेदाऽमलानन्तभव्यप्रकाराभिरामोल्लसद्धेतिजालप्रमीतामरा— रातिवर्गापवर्गप्रदाजातशत्रो, सहस्राक्षफालेक्षणाष्टेक्षणादित्रयस्त्रिंशद्स्वप्नकोटिप्रधानोरगाधीश भद्रा सुकीर्तीश सेनाप्रधानेश-सूरीन्द्रसर्वस्व, मुक्तानुरक्ताऽऽत्मभक्तप्रपन्नप्रियाऽशेषबद्धात्मरक्षाव्रतिन्, दामसंबद्धगोपाल, गोवर्धनोद्धार, गोपाङ्गनाकान्त, गोलोकभूपाल, कुन्तीकुम राप्ततद्विड्जनानाप्त, हे केशवानन्त गोविन्द, देवाऽच्युताऽधीश, हेमाधवाभिख्यविष्णो, मधुघ्न, त्रिविक्रान्त, हे वामन, श्रीधर, त्वं हृषीकेश, दामोदराकार, हे वासुदेवानिरुद्धाख्य, हे प्रोल्लसद्द्युम्नसङ्कर्षणात्मन्, पयोराशिशायिन्, श्रियःकान्त, वैकुण्ठ हेमत्स्य, हे कूर्म, हे कोल, कण्ठीरवात्मन्, हरे, वामनावामनाकार, हे रोषरामानुकम्पोल्लसद्रामशेषांशरामाऽखिलात्मावतारांश कृष्णप्रभो, भाविकल्किन् पुनस्ते नमः॥

श्रुतिश्रुतं प्रपद्येऽहं संदृष्टं धरणीश्रुतौ।
श्रीमन्नारायणं सद्यः प्रणतार्तिनिवारणम् ॥

इति श्रीशैलसत्यनिलय श्रीनिवासदेशिकाचार्य कृतिषु
श्री बदरीनाथनारायणदण्डकं सम्पूर्णम्

## १३. अथ विष्णुपदीमुक्तपदावलंबस्तवः

स्वर्णनद्यासमाश्लिष्टस्वर्णदीवातिसुन्दरम् ।
स्वर्णवर्णश्रियाऽऽश्लिष्टं वन्दे शुभ्राश्वकन्धरम् ॥ १ ॥
मुनिं [1] मुक्तपदाऽऽसक्तं तादृशागमदर्शिनम् ।
नत्वा शठद्विषं कुर्मि स्तवं मुक्तपदग्रहम् ॥ २ ॥
वन्दे मङ्गळदेवीन्द्र विक्रान्ताङ्घ्रिनिकेतनाम् ।
तां सर्वमङ्गळाकान्तमौळिमाल्यां (मन्यां) तरङ्गिणीम् ॥ ३ ॥
तरङ्गिणीं मुक्तपदावलम्बिनीं स्तोष्याम्यहं बद्धपदावलम्बनः ।
कथं शुभैः मुक्तपदावलम्बनैः प्रसीदतात्तन्मयि सा तरङ्गिणी ॥ ४ ॥
तराङ्गिणीन्द्रजाकान्तकमनीयाङ्घ्रिकन्यकाम् ।
नमामि जह्नुजामार्यां विश्वमङ्गळमालिकाम् ॥ ५ ॥
मालिकेयं सुवर्णाद्याकल्पतां जाह्नवीमुदे ।
काळिकेशं प्रसाद्योर्वीं यामनैषीद्भगीरथः ॥ ६ ॥
भगीरथो जयत्युर्व्यां यत्नाम्बुनिधिपारगः ।
यत्प्रभावो भुवः प्रादात्तुङ्गगंगासुधाशनम् ॥ ५ ॥
अशनं यागशेषस्य यजनं मधुविद्विषः ।
जह्नुजाकणिक (का) पानं मुक्तिं दत्ते सकृत्कृतं ॥ ६ ॥
कृतत्रिविधविक्रमत्रिदशलोकनाथानुज-
प्रवृद्धचरणाम्बुजस्रुतमरन्दधारापगे ।
महानटजटातटस्फुरदुडु(प्रभु)प्रस्रव-
त्सुधारससमेधितासदृशभोग्यते शं तनु ॥ ८ ॥
शन्तनोरङ्गना गङ्गा सकलं शं तनोति नः ।
जन्मस्थानमभूद्यस्यास्सर्वलोकैकमङ्गलम् ॥ ९ ॥
मङ्गलं सम्पदां मूले तुभ्यं चन्द्रांशुशीतळे ।
सुशीले पुण्यसलिले नतपाले सुनिर्मले ॥ १० ॥
निर्मलाशयसम्भाव्ये त्रिषप्तस्कन्धशोभिते ।
ओंकाररूपिणि त्वं मे गतिर्जाह्नवि भव ॥ ११ ॥

---

[1] मोक्षोपायोदञ्चित-निजागमद्वारा आर्तलोकानां मुक्तपदग्राहकेण कुरुकेशमहा-मुनिना-स्वप्रदष्टभाषागमे सहस्रसूक्तपरिमिते, प्रतिसूक्तारम्भेऽपि मुक्तपदग्रहणं कृतमिति अस्मिन् मुक्तपदावलम्बस्तवे तन्महामुनिवन्दनं स्तोता. (निबध्नाति)

अव मां दीनमज्ञातदिग्भेदमतिबालिशम्।
दयामयापगे गङ्गे (प्रा)पाग्गण्यं सर्वपापिनाम्॥ १२॥
पापिनां च द्रुतिस्त्वं मां जह्नुजे रक्ष मा चिरम्।
कृतं मया न सुकृतं सकलं दुष्कृतं कृतम्॥ १३॥
कृतकृत्यशुभाधानं तिरोधानं महाम्भसाम्।
सन्धानं पुरुषार्थानां गङ्गाम्भः पातु मां क्षणात्॥ १४॥
क्षणादखिलपापाब्धिविशोषकपयःकणे।
अघायुरिन्द्रियारामः गङ्गेत्वामगतिःश्रये॥ १५॥
श्रये शैलसमुत्तुङ्गतरङ्गावळिबन्धुराम्।
सङ्गतानङ्गताताङ्घ्रिजलजां जह्नुजां सदा॥ १६॥
सदागतिसखस्तूलचलजालमिव क्षणात्।
ममाचलनिभाघानि भस्मसात्कुरु जन्हुजे॥ १७॥
जन्हुजे पद्मजाण्डस्थासकलांहः-कणस्यते।
आद्यप्राणाहुतेर्नालमन्येतन्वन्त्युपोषणम्॥ १८॥
ऊषण-प्रमितां विष्णोस्तुलसीं न्यस्य पादयोः।
सकृद्गङ्गाकणं प्राश्य वैकुण्ठे मोदते सदा॥ १९॥
सदागतिमिमं गंगे तव पातु सदागतिः।
भद्रं सदागतिं मन्ये तदागतिमहं सदा॥ २०॥
[1] सदारामोपकण्ठस्थामूर्[2]मिलास्यमनोरमाम्।
[3] हरिद्वारपदारूढां गंगे त्वांवेद्मि लक्ष्मणम्॥ २१॥
लक्ष्मणस्याऽग्रजं मन्ये[4] सदाशरविवर्धिनीम्।
[5] मालालङ्कृतसुग्रीवां [6] सांगदां त्वां दिवोधुनि॥ २२॥

---

[1] सदा रामोपकण्ठस्थो लक्ष्मणः समीचीनारामोपकण्ठस्था गङ्गा.

[2] ऊर्मीणां लास्यैर्मनोहरा गङ्गा ऊर्मिळाया आस्यस्य मनोहरो लक्ष्मणः.

[3] हरेः रामस्य, आस्थानस्य पदारूढो लक्ष्मणः, हरिद्वारक्षेत्रपदारूढा गङ्गा.

[4] सदा शराणां तृणविशेषाणां परिग्रहवती गङ्गा संचासौ आशरश्चेति व्युत्पत्त्या समीचीनराक्षसो विभीषणः तत्परिग्रहीता रामः.

[5] दिव्यरत्नादिमालालङ्कृत-सु-ग्रीवा गङ्गा दिव्यवलयालङ्कृत-सु-ग्रीवः सुग्रीवा-कीन्द्रः (कपीन्द्राख्यः)

[6] केयूरं, वालिसूनुरङ्गदश्च.

धुनी तव[1]सवागारं प्रविष्टात्रि[2]पदाक्रमा।
[3]क्वचित्कुब्जा क्वचिद्दीर्घा गङ्गे नूनं त्रिविक्रमः॥ २३ ॥
विक्रमैर्बन्धुरे गङ्ग यमुनाश्लेषशालिनि।
साधुवृन्दावनाऽऽसक्ते जाने त्वां यदुनन्दनम्॥ २४ ॥
[4]नन्दनोपगते गङ्गे क्रतुध्वंसिनि शङ्करि।
[5]विभूतिकलिने नित्यमा[6]र्यासे त्वं हरः परः॥ २५॥
परं हि [7]मकरारूढां गोक्षीरधवलाकृतिम्।
पुण्डरीकासनस्थां त्वां गङ्ग मन्ये हयाननम्॥ २६ ॥
आननं सर्वसिद्धीनां विशुद्धां विश्वपावनीम्।
गङ्गे त्वां स्तौमि मद्भाव समुन्मीलय दिव्यताम्॥ २७॥

दिव्याश्वना[8]सापृषदश्वतस्ते
गुणोन्नतास्स्त्रर्धुनि विप्रुडश्वाः।
आद्यो द्विजानेव पुनाति काले
विश्वं क्षणाधादपरे पुनन्ति ॥ २८ ॥

पुनन्ति पापिनः सर्वान् यस्याः क्षेत्राणि सत्वरम्।
षट्शास्त्रागमविख्याताः जाह्नवीं तां समाश्रये ॥ २९ ॥
श्रयेऽहं रामचरणपादुकामिव जाह्नवीम्।
या निष्क्रम्य रमेशाङ्घ्रेर्जुगोप भुवनं स्वयम्॥ ३० ॥
स्वयम्भुशङ्करेन्द्रादि सकलामरवन्दिते।
भूरादिसर्वलोकेशश्रीशवत्त्वं परागतिः॥ ३१ ॥
गतिहीनमनाथं मां पतितं सुरनिम्नगे।
गतिदा नाथभूता च त्वमुद्धर्त्री च पश्य माम्॥ ३२ ॥

[1] जह्नुयागशाला.

[2] स्वर्गमर्त्यभूपातालाख्यत्रिस्थानवाहिनी.

[3] भूसन्निवेशतारतम्येन गङ्गायाः कुब्जत्वं दीर्घत्वं च वामनत्रिविक्रमयोस्तु तदुभयं स्पष्टं.

[4] पुत्राभ्यां गजाननषण्मुखाभ्यां, नन्दनाभ्यां नंदनवने च.

[5] भस्म, ऐश्वर्यं च. [6] आर्यया, अर्यैश्च.

[7] हि-मकरारूढां, गङ्गायाः वाहनं याः हिमकरः. (हि मकरः)

[8] दिव्याश्वस्य-हयमुखस्य नासा या निश्वसितरूपपृषदश्वाः वेदाः.

मां पापिनां च पापिष्ठं वञ्चकानां च वञ्चकम् ।
कृतघ्नं च कृतघ्नानामवताज्जाह्नवीकणः ॥ ३३ ॥
कणस्ते यात्रिकानीतपीतोह्यन्याम्बुवर्धितः ।
अनन्तकोटिब्रह्माण्डान्पुनातीत्यल्पदर्शनम् ॥ ३४ ॥
[1]दर्शनस्पर्शवाग्दीक्षाः पतितान् पङ्क्तिपावनान् ।
नरकघ्राङ्घ्रिलाभार्हान्सद्योजाह्नवि तन्वते ॥ ३५ ॥
तन्वतां निस्तरङ्गं मे तरङ्गास्ते चलं मनः ।
सद्यस्सन्दर्शनाद्यासामपवर्गायते भवः ॥ ३६ ॥
भवतापघ्नशक्तिस्ते साक्षाद्दृष्टाश्रुतैरलम् ।
भवतापमविश्रान्तं या त्वं लुम्पसि जह्नुजे ॥ ३७ ॥
जह्नुजे विस्तरेणालं त्वत्प्रभावसमर्थने ।
जन्म सद्म च यत्तेभू न्मुक्तभोग्यांघ्रिपङ्कजम् ॥ ३८ ॥
पङ्कजं हि पयो रूढं न रूढं पङ्कजे पयः ।
रूढा पयोमयी यात्वं पादाब्जात्किमिदं हरेः ॥ ३९ ॥
हरेर्वामपदाङ्गुष्ठनखाञ्चलसमुद्भवे ।
भागीरथि नमस्तुभ्यं क्षिपार्तै मयि ते दृशम् ॥ ४० ॥
दृशस्ते करुणासान्द्रा यान्स्पृशन्त्यल्पमाशुते ।
इहचामुत्र ते गङ्गे स्युः कल्याणैकभाजनम् ॥ ४१ ॥
भाजनानांस्थुपारुह्य रक्षायात्रापरायणाम् ।
गुरुश्शिष्यानिव त्रातुं दयागङ्गां समाश्रये ॥ ४२ ॥
श्रये सगरसन्तानसद्गतिप्रदपद्धुनीम् ।
भगीरथयशस्सिन्धुशरद्राकेन्दुचन्द्रिकाम् ॥ ४३ ॥
चन्द्रिकावर्षधारेव शीतळां नौमि जन्हुजाम् ।
वैषम्यं प्रकृतौ यस्याः न विलोमानुलोमयोः ॥ ४४ ॥
अनुलोमविलोमेषु समत्वे तव जह्नुजे ।
प्रकृतिः प्रत्ययंदत्ते विना तेन गिराह्यलम् ॥ ४५ ॥
अलं गङ्गे जपध्यानयागयोगव्रतादिभिः ।
सद्यः पच्यलघूपायस्नानं ते सौति नः शुभम् ॥ ४६ ॥

शुभतमकृतिसक्तिं साधुचित्तानुवृत्तिं
समयसदृशयुक्तिं देशकालप्रशस्तिम् ।

कपटरहितभक्तिं कर्णपेयामृतोक्ति
विहित विषयरक्तिं जन्हुजा नः प्रदत्ताम् ॥ ४७ ॥
दत्तां चेतः प्रसादं मे प्रसन्नाङ्घ्रिधुनी हरेः ।
परतत्वांशविज्ञानमभिसन्धिविशालताम् ॥ ४८ ॥
विशालं दीनवात्सल्यं वीक्ष्यते त्वन्मुदे ध्रुवम् ।
[23]नदीनोऽभूत्प्रियोदीनस्तेनामधुरि जन्हुजे ॥ ४९ ॥
जह्नुजे मृदुलामोद शिशिरास्त्वत्कणोद्वहाः ।
स्पर्शदाने न हीक्षन्ते नीचतामम्ब नोच्चताम् ॥ ५० ॥
नोच्चतां नीचतां वेति महिम्नस्ते विशालता ।
जन्हुजे तव लीढयाश्शुनासीरेण वा शुना ॥ ५१ ॥
शुनकं वा शुनासीरं पिशुनं लशुनादिनम् ।
अविमर्शं त्वमासन्नाननुगृण्हासि जन्हुजे ॥ ५२ ॥
जन्हुजे त्वां श्रितो हेयो मातरिश्वाऽपि शुद्ध्यति ।
जन्हुजे त्वां श्रितो हेयोमातरि, श्वाऽपि शुद्ध्यति ॥ ५३ ॥
शुद्ध्यत्यात्मा बुभुक्षूणां मुमुक्षूणामिवाऽचिरम् ।
त्वत्तीरवासिनां गङ्गे विनोपायैः परैःस्वतः ॥ ५४ ॥
स्वतस्सिद्धप्रभावोऽस्मान्पायाद्गङ्गाम्बुविप्रयोः ।
यः कर्मणा न केनाऽपि वर्धते नापि हीयते ॥ ५५ ॥
हीयते न हरौ यस्य शेमुषी भक्तिरूपिणी ।
तदंघ्रिजतटिन्यां वा सोश्नुत सर्वसम्पदः ॥ ५६ ॥
सम्पदं मुक्तिपर्यन्तां दोग्ध्रीमात्मकणाशिनाम् ।
नौमि गङ्गामहं विष्णोः स्मृतिदां समयेऽन्तिमे ॥ ५७ ॥
अन्तिमे वयसि त्वं मामनयस्तव सन्निधिम् ।
जन्मन्यस्मिन्कृपामेतां गंगे मयि पुनस्तनु ॥ ५८ ॥
यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् ।
यत्तपस्याम्यहं कृष्ण तत्सर्वं स्तात्त्वदर्पणम् ॥ ५९ ॥

इति श्रीशैलसत्यनिलय श्रीनिवासदेशिकाचार्य कृतिषु
विष्णुपदी-मुक्तपदावलम्ब
स्तवः सम्पूर्णः

श्रीः

## १४. अनुलोमविलोमगतिस्तवः

नवकवन

कारिका

देवंनंदनन्दनं वंदे

पुराणपुरुषायाऽस्तु नित्ययौवनशालिने ।
सुमज्ञानिसमाख्याय वेधसे विष्णवे नमः॥ १ ॥

स्तवपाठफलश्रुतिः

प्रत्यायान्ति सुखेन नैजसदनंपान्थाः, प्रयान्त्यापदः ।
तारुण्यं स्थविराः श्रयन्ति, विभवं दीनाः, रुजापीडिताः ॥
उल्लाघाः प्रभवन्ति संस्तवमिमं जप्त्वा विलोमक्रियाः ।
सर्वे यान्त्यनुलोमतां मनुविदामेतद्धि दिग्दर्शनम् ॥ २ ॥
सत्यं सत्यं पुनस्सत्यं मान्त्रिकैस्समुदाहृतः ।
सृष्टिस्थितिलयन्यासक्रमः फलति सत्कृतः ॥ ३ ॥

अत्र प्रपञ्चसारसंग्रहस्थं पद्यमेकं जप्तृणां श्रीप्रदं अनुलोमविलोमगतावेकरूपचरणक्रममुदाह्रियते। अधिकांशस्तु यथोक्ततंत्रव्याख्यासु गीर्वाणेन्द्रादितत्सम्प्रदायाऽभिज्ञविरचितासु द्रष्टव्यः ॥

प्रपञ्चसारः चतुर्मुखाय भगवता उपदिष्टः आदिशङ्कराचार्यैः सङ्कलितः प्रपञ्चसारसंग्रहाख्यामुपगत इति । प्रपञ्चसारसंग्रहपीठिकाभागादवगम्यते ॥

श्रीसामायायामासाश्री सानोज्ञेयाज्ञेया नोसा ।
मायालीलालालीयामा याज्ञेलालीलीला ज्ञेया ॥ १ ॥

इति प्रपञ्चसारसंग्रहस्य १३ तमपटले श्रीप्रदतोतला
मन्त्रन्यासाऽवसरे द्रष्टव्यः ।

इति पीठिकाप्रकरणम्

अनुलोमविलोमाभ्यां समाख्या नंदनंदनं ।
नत्वा स्तवमिमं कुर्वे प्रतिलोमविलोमयोः ॥

[1] कलोदारग्दालोक नंदनंददनंदन ।
वंदेवंशिशिवंदेवं नंदवाससवादनं ॥ १ ॥
मेशपावन मद्धाम्नि चिद्धामनवपाशमे ।
सनदासरसाधीशधीसार सदानस ॥ २ ॥
मेशहेमम सोमाक्षक्षमासो मम हेशम ।
सितचेतसि देवाऽऽस्व स्वयाऽऽदेऽलित, चेतसि ॥ ३ ॥
नंदनं सुकलोदारग्दालोक सुनंदनं ।
नंदवासशिवं देवं वंदेवंशिसवादनं ॥ ४ ॥
नन्दनन्दनभामासोसोमाभानन्दनन्दन ।
राधयाऽतनुमां रक्षक्षरमां नुत, या-धरा ॥ ५ ॥
घन, सार, शतावास, सवाताशरसानघ ।
मेयहास रदालोक-कलोदारसहायमे ॥ ६ ॥
टङ्क वेङ्कट हपापं पंपाह टङ्कवेङ्कट ।
मेशादवप्रभोविज्ञ ज्ञाविभो प्रवदेशमे ॥ ७ ॥
रमयाश्रितभूपाललपाभूतश्रियामर ।
टङ्कवेङ्कट कंपमे पङ्कम टङ्कवङ्कट ॥ ८ ॥
विदितां महितांगीतां तां गीतां हिमतां दिवि ।
वदयादव शंतेऽस्तु स्तुतेशंवदयादव ॥ ९ ॥
वशिदास क्षमावास सवामाक्ष सदाशिव ।
रक्ष मां सुसवादीश शधीवास सुमांक्षर ॥ १० ॥
गरदूर सुभाषेश शेष-भासुर-दूरग ।
करदारकमश्चास्व स्वश्चामकरदारका(क) ॥ ११ ॥
हेममार क्षमादास सदामाक्षरमामहे ।
तनुसारवराहेश शहेराव रसानुत ॥ १२ ॥

---

[1] बालभाषितेष्विवाऽनभिव्यक्तापुष्टार्थतात्पर्यांशेषु चित्रकाव्येषु सहृदयाः कविहृदयाप्रविष्टान् सुसंगतान् हृदयङ्गमान् अर्थान् समुद्भाव्य प्रमादवशात आपतितान् दोषान् उच्चाट्य गुणांशं प्रगृह्य तुष्यन्तीति विस्रम्भात् टिप्पण्यादिकं लिखितमपि तन्नाऽत्र प्रकाशितम् एवं विधक्लिष्टस्तवलेखनप्रयोजनं पीठिकायामेव विवृतमित्यलं पुनरुक्तिपुरस्कारेण ॥

विदितं, दिवि तवंदे देवं तंविदितं दिवि ।
यजतं मतिदंसार रसादंतिमतंयज ॥ १३ ॥
दिविगां विदितांगीतांतां गीतांदिविगांदिवि ।
रक्षवंशिवरावासे सुवारावशिवंक्षर ॥ १४ ॥
वंशिभूतिनुतंदेविविदेतेनुतिभूशिवम् ।
नुतदेवरदेयागे गयादेरवदेतनु ॥ १५ ॥
वेदयादव मे वंशिशिवंमेवदयादवे ।
शंविदासहितंदविविदे तं हि सदाविशं ॥ १६ ॥
नवपावन दासत्वं त्वंसदाऽनवपावन ।
हेभवाऽऽदिशमे सार रसामेशादिवाभहे ॥ १७ ॥
सोमाभाननभामासो घनसाररसानघ ।
हेमादाससदामाह कविताशशतावक ॥ १८ ॥
नाळीकाननकाळीनाऽऽनतदाससदातन ।
सेवावाससवावासे रक्षमांममांक्षर ॥ १९ ॥
सभासाररसाभासवनदाररदाऽनव ।
हे मात्रास सवामाहे बरदाऽऽननदारव ॥ २० ॥
श्रीन, वीन–नवीनश्रीसरसानन सारस ।
रसाधीश, शधीसार वनजाननजानव ॥ २१ ॥
वशाधीशशधीशाव घनदाश शदानघ ।
स्तव्य रक्ष क्षेरव्यस्त नाकिनाऽपि पिनाकिना ॥ २२ ॥
शस्येपाददपास्येश शतभृत तभृतश ।
शधामेश शमेधाश भरताननतारभ ॥ २३ ॥
देयादाननदायादे देयदासुसुदायदे ।
विदेत ममते देवि तं हि मे दद मेहितं ॥ २४ ॥
लोकोदाससदालोको विभुलोककलो भुवि ।
शीलासाररसालाशी तैश्शदोमम दोश्शतैः ॥ २५ ॥
हेदेवांग गवांदेहे संगताक्षक्षतागसम् ।
दयादास सदायाद रचयाऽज-जयाऽचरा ॥ २६ ॥
सदाधीशशधीदास तनु-भूनत-भूनुत ।
नदीतान-नतादीन विभुतां मम तां भुवि ॥ २७ ॥

मे रामासु सुमारामे राक्षसा मम साक्षराः ।
मासीताममतासीमा सवयात तयावस ॥ २८ ॥
शक्तेभस्थस्वभक्तेश भव्यभाननभाव्यभा(भ) ।
स्ववतारस्तावस्व नवभाविविभावन ॥ २९ ॥
त्वं पितेशशतेऽपित्वं दशकाननकाशद ।
पंपांशमेमेशपापं पक्षिभोग गभोःक्षिप ॥ ३० ॥
शदे-वेदद-वेदेश तनु-दाश शदाऽऽनुत ।
गयासार रसायाग विभुतां-ममतां-भुवि ॥ ३१ ॥
तंश्रीदममदश्रीतं कंसभाविविभासकं ।
क्षं रसाननसारक्षं सन्नमाऽऽततमानसं ॥ ३२ ॥
यजामहे ह्वेमजाऽऽय भविभूतत भूविभ ।
मयासाररसायाम वत्सहृद्यद्य-हृत्सवः ॥ ३३ ॥
शिवं तेस्तु स्तुतेवंशि सुध्वनेगगनेऽध्वसु ।
हितां गीश शगीतांहि नादिताऽसिसितादिना ॥ ३४ ॥
कलबालकवाणीवा वाणीवाकलबालक ।
मासते ज्ञज्ञदेवादे देवादेज्ञज्ञते समा ॥ ३५ ॥

॥ सर्वतो भद्रबन्धः ॥

रसाधीश शधीसार सारसाममसारसा ॥
धीसारभू भूरसाधी शमभूततभूमश ॥ ३६ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | सा | धी | श | श | धी | सा | र |
| सा | र | सा | म | म | सा | र | सा |
| धी | सा | र | भू | भू | र | सा | धी |
| श | म | भू | त | त | भू | म | श |
| श | म | भू | त | त | भू | म | श |
| धी | सा | र | भू | भू | र | सा | धी |
| सा | र | सा | म | म | सा | र | सा |
| र | सा | धी | श | श | धी | सा | र |

इति श्रीशैलसत्यनिलय श्रीनिवासदेशिकाचार्यकृतिषु
अनुलोम विलोमगतिस्तवः
सम्पूर्णः

**ON INDIA GOVERNMENT SERVICE**

CERTIFICATE OF POSTING OBTAINED

**BOOK POST**




**To**

0.7.39. Sri K.Jogiah.,
51. T.H. Road.
M A D R A S

*Maharaja's Sanskrit College,*
*Mysore.*